निकर्णोद्भवरोगमत्र ॥ क्रूरादिषष्ठ्यंशयुतेनदीशेकर्णोत्थरोगंकथयंतितज्ज्ञाः ॥४९॥ सौम्ययुक्तेतृतीयेवासौम्यखेचरवीक्षिते ॥
नदीशेशुभसंयुक्तेकर्णयोर्भूषणंवदेत् ॥५०॥ शुक्रेतृतीयेयदिमौक्तिकंतुजैवेतुलंत्वाभरणंवदंति ॥ भानोस्तुसंबंधयुतेतृती
येसद्रत्नमानीलमथाहिमांद्ये ॥५१॥ चंद्रेबहुत्वाभरणंतुसौम्येश्यामंभवेत्तत्क्षितिसूनुराशौ ॥ विचित्रमार्गाभरणंतथैवपा
पेक्षितेतत्क्षयमाहुरार्याः ॥५२॥ शुभग्रहाणांभवनेतुतस्मिन्तृतीयराशौश्रवणंकथानाम् ॥ पुण्यादिकानांयदिपापराशौक्रू
रस्थतत्कर्णकुठारमाहुः ॥५३॥ ॥ इतितृतीयभावः ॥ ॥ अथचतुर्थभावः ॥ ॥ बंधुभवनेबंधून्गृहमातृजलात्म
वृद्धिभाज्यादीन् ॥ वाहनहृदयस्कंधासनशयनस्करवानधोजलंब्रूयात् ॥१॥ लग्नेश्वरेलग्नगतेस्करखेगनाथेनयुक्तेयदिगेह-
लाभः ॥ अयत्नतःस्याच्छुभदृष्टियोगात्स्वोच्चस्वमित्रेस्वगृहेबलाढ्ये ॥२॥ गेहाधिपेकेंद्रगतेबलाढ्येसौम्येक्षितेमंदिरलाभ
माहुः ॥ वैशेषिकांशेपरमोच्चभागेगेहेश्वरेमंदिरलाभमाहुः ॥३॥ गृहस्थानाधिपस्यांशनाथसंयुक्तराशिपः ॥ नदंशाधिप-
तोकेंद्रेगृहलाभमुदीरयेत् ॥४॥ भाग्येशकेंद्रभावस्थेगृहेशेस्वोच्चमित्रगे ॥ गृहराशिगतेखेटेस्वोच्चेबहुविचित्रके ॥५॥ तृती
येसौम्यसंयुक्तेगृहेशेस्वबलान्विते ॥ नदीशेबलसंपूर्णेहर्म्यंप्राकारमंडिते ॥६॥ सिंहासनांशकेवापिगृहेशेगोपुरांशके ॥ मृ
दंशादियुतेवापितद्गृहंसौधमंडितम् ॥७॥ पारावतांशकेगेहनाथेगुर्विंदुवीक्षिते ॥ गोपुराद्यंशकेवापिदैविकेहर्म्यमादिशेत् ॥

विचित्रसौधप्राकारमंडनंगृहमादिशेत् ॥ कर्माधिपेनसहितेनाथेकेंद्रेकेस्त्रतुना ॥ ९॥ गेहाधिपेनाशगतेयदिस्यात्पापेक्षितेनेतद्गृह
नाशमत्र ॥ गेहेशसंयुक्तनवांशनाथेनाशस्थितेस्यादपिगेहनाशनं ॥ १०॥ बंधुस्थानेश्वरेसौम्येसौम्यग्रहनिरीक्षिते ॥ तत्कारके
बलाढ्येवाबंधुपूज्योभवेन्नरः ॥ ११॥ बंधुस्थानगतेजीवेतदीशेशुभसंयुते ॥ गुरुदृष्टिसमायुक्ते बंधुश्रेष्ठोभवेन्नरः ॥ १२॥ बंधू
पकर्तातन्नाथेकेंद्रकोणयसंयुते ॥ वैशेषिकांशसंयुक्तेपापदृग्योगवर्जिते ॥ १३॥ बंधूनामुपकारीस्याद्बंधोगुर्वंशसौम्यजाः ॥ नेपो
गृहेवानैर्दृष्टेस्मृदृशादिसमन्विते ॥ १४॥ बंधुभिस्त्यक्तपुरुषस्तदीशेपापसंयुते ॥ क्रूरषष्ट्यंशकेवापिनीचारातिगृहेपिवा ॥ १५॥
बहुपापसमायुक्ते बंधोनाथेनयेवाह ॥ तत्कारकेतथैवात्रबंधूनांकुत्सितोवदेत् ॥ १६॥ नाथकारकसंयुक्तनवांशेशांशनायकः ॥ नी
चराशिगतोमृदौबंधूनांभयकृन्मतः ॥ १७॥ बंधूपभोगीकेंद्रस्थेतदीशेशुभवीक्षिते ॥ गोपुराद्यंशकेवापिमृदंशादिसमन्विते
१८ धनेलाभेत्रिकोणस्थेतन्नाथेशुभवीक्षिते ॥ सौम्यग्रहाणामंशेवाबंधूनामुपकारकृत् ॥ १९॥ बंधुद्वेषीभवेन्नित्यंपापाक्रांते
ग्रहेयदा ॥ नीचास्तंखेटसंयुक्तेशुभदृग्योगवर्जिते ॥ २०॥ कस्मिंश्चित्खेचरेकेंद्रेवाबंधोस्वोच्चेस्वमित्रभे ॥ गुरुणादृष्टिसंपाते
बंधुपूज्योभवेन्नरः ॥ २१॥ गृहस्थानेचरेलग्नेतदीशेचरराशिगे ॥ नष्टेवतत्कारकेपिबहुस्थानेगृहंभवेत् ॥ २२॥ स्थिरेगृहेस्थिर
गृहंनाथकारकयोरपि ॥ षष्ट्यंशेशुभभागेवातदीशेस्थेयतांव्रजेत् ॥ २३॥ अर्थव्ययगृहेशेस्तेयावंतःपापसंयुताः ॥ तावद्गृहा

दिनाशः स्याच्छुभदृष्टानदोषदः ॥२४॥ अर्थव्ययगृहेशास्तु केंद्रकोणादिसंयुताः ॥ तावद्गृहालयं सर्वं शोभनं तत्र निर्दिशेत् ॥२५॥ गृ-
हेशे कर्मराशिस्थे कर्मेशे गेहभागते ॥ बलयुक्ते धरासूनौ बहुक्षेत्रं विनिर्दिशेत् ॥२६॥ बलाढ्ये कर्मराशीशे बंधुस्थानाधिपे तथा ॥
तयोर्मैत्री यदा तस्य बहुक्षेत्रं विनिर्दिशेत् ॥२७॥ क्षेत्रस्थाने शुभे युक्ते नदीशे शुभसंयुते ॥ तनूकारके नतथा भासे-
बहुक्षेत्रधनैर्युतः ॥२८॥ क्षेत्राधिपे पंचमस्थे गोपुरांशादिसंयुते ॥ मृदंशादिगते वापि बहुक्षेत्रसमन्वितः ॥२९॥ भ्रातृकारकसंयुक्ते
भ्रातृनाथेन संयुते ॥ क्षेत्रे नदीश्वरे वापि भ्रातृक्षेत्रं विनिर्दिशेत् ॥३०॥ क्षेत्रेशसंयुक्तनवांशनाथे केंद्रस्थिते मित्रनिरीक्षिते वा ॥
सौम्यान्विते सौम्यदृशा समेते भ्रातुर्भवं क्षेत्रमुदाहरंति ॥३१॥ लग्नेश्वरे क्षेत्रगते बलाढ्ये लग्ने बलिष्ठे यदि क्षेत्रनाथे ॥ शुभग्रहे दृष्ट-
समागमे वा क्षेत्रं स्वकीयेन बलेन याति ॥३२॥ कलत्रकारके क्षेत्रनदीशे वा कलत्रगे ॥ नदीशपास्तथा मेष्या कलत्रात्क्षेत्रमादिशेत्
३३ षष्ठेश्वरे क्षेत्रगते बलाढ्ये षष्ठस्थिते वा गृहभावनाथे ॥ षष्ठेश्वरात्क्षेत्रपतौ बलाढ्ये शत्रोः सकाशात्स धरामुपैति ॥३४॥ पारा-
वतांशे स्वगृहे बलाढ्ये क्षेत्रेश्वरे चोपचयंगते वा ॥ आरोहभागे शुभदृष्टियुक्ते क्षेत्रं बहुत्वं समुदाहरंति ॥३५॥ धनेशलाभेशस-
मन्विते वा क्षेत्रे नदीशे पथकारके वा ॥ वैशेषिकांशे शुभदृष्टियुक्ते बहुर्थरूपं गृहमाहुरार्याः ॥३६॥ क्षेत्रेश्वरे नीचगते विमूढे पापा-
तरे पापनिरीक्षिते वा ॥ पापग्रहे क्षेत्रगते रिगेहे क्षेत्रादिनाशं कथयंति तज्ज्ञाः ॥३७॥ पापांतरस्थे यदि भूमिपुत्रे पापान्तरे पापनिरी-

स०ति०
२१

स्थितेवा ॥ पापग्रहक्षेत्रगतेथवास्यात्क्रूरांशकेभूमिविनाशमाहुः ॥३८॥ क्रूरादिषष्ट्यंशगतेनदीशेक्षेत्रेसपापेयदिनीचभेवा ॥ दुःस्थ
रिगेहेत्वतिभीषणांशेक्षेत्रादिनाशंकथयंतितज्ज्ञाः ॥३९॥ क्षेत्रेश्वरेपापयुतेधनस्थेनीचारिभेक्षेत्रविनाशमेति ॥ स्वोच्चस्थिते-
तद्भवनेश्वरेतुपापान्वितेविक्रयमेतिभूमेः ॥४०॥ आज्ञाक्षयात्क्षेत्रविनाशमाहूराज्येश्वरेक्षेत्रगतेसपापे ॥ क्रूरांशकेमृत्युयमा-
दिभागेकर्मेश्वरेणापियुतेतथैव ॥४१॥ आज्ञाक्षयात्भूमिविनाशमेतिराजेशतत्कारकभूमिनाथे ॥ क्रूरांशकेवाप्यवरोहभा-
गेनाशस्थितेमृत्युयमादिभागे ॥४२॥ राजाज्ञयाक्षेत्रविनाशमेतिभानोनदीशेनयुतेपिनिम्ने ॥ धनेशसंयुक्तनवांशनाथयु-
क्तांशपेनापियुतेसपापे ॥४३॥ जीवेनदृष्टेयदिवानदीशेरम्येगुरोःशोभनखेचरेवा ॥ सौम्यांतरेतद्भवनेससौम्येसुखीभवे-
त्सर्वजनेषुमुख्यः ॥४४॥ जीवेबलाढ्येसुखराशिनाथयुक्तेससौम्येतुचतुष्टयेवा ॥ जीवेनदृष्टेयदिवानदीशेमृद्वंशकेवासु-
खभाक्नरःस्यात् ॥४५॥ सुखेगुरोःशोभनखेचरेवासौम्यांतरेतद्भवनेससौम्ये ॥ जीवेबलाढ्येयदिलग्ननाथात्सुखीभ-
वेत्सर्वजनेषुमुख्यः ॥४६॥ गोपुराद्यंशकेवापिसुखपेदेवपूजिते ॥ धनायवृद्धिभावेषुतस्मिन्खेटेसुखीभवेत् ॥४७॥ सौ-
म्येतरान्वितेसौख्येबलहीनेगुरावपि ॥ सपापेदुर्बलेनाथेदुःखीस्यादर्थसंयुतः ॥ पुत्रार्थबंधुयुक्तश्चदुःखीस्यात्नीचखेच-
रे ॥ सुखीनदीशेपापेनयुक्तेक्रूरांशसंयुते ॥४८॥ स्थारियुक्तेसुखराशिनाथेक्रूरांशकेसौम्यदृशाविहीने ॥ आरोहभाग-

अ०
४

२१

नरभागयुक्ते जातो नरो दुःखित एव नित्यम् ॥५०॥ नीचारिभागे रविभूमिपुत्रे खस्थिते पापदृशा समेते ॥ क्रूरांशके नष्टवनाधिना
थगृहार्थहीनो भवति प्रमादात् ॥५१॥ पापान्विते पापनिरीक्षिते वा पापांनरे वा खरव भेनदीशे ॥ क्रूरादिषष्ठ्यंशसमन्विते वा पापीन
रः स्याच्छुभदृष्टियुक्ते ॥५२॥ पापे बहुत्वे खराशियुक्ते नदीश्वरे चारिविमूढयाने ॥ पापान्विते वा यमसूनुयुक्ते जातो बहुत्वे समु
पैति पापम् ॥५३॥ शुक्रेन्दुविद्देवपुरोहितानां क्षेत्रे खस्थे पूर्णबलान्वितानाम् ॥ शुभान्विते शोभनदृष्टियाते जातो नरोयं फलविप-
क्तिभाक्स्यात् ॥५४॥ बुधदृष्टे सिते सौख्ये सौम्यमध्यगते पि वा ॥ गोपुराद्यंशगे वापि पुण्यभाक्स नरो भवेत् ॥५५॥ नीचा-
न्विते मूढयुते खस्थे सपत्नभे वा जलराशिसंज्ञे ॥ नदीश्वरे हीनबले नदानीं पतत्यसौ कूपतटांबुराशौ ॥५६॥ लग्नेश्वरे हीनबले
खस्थे नीचर्क्षयुक्ते पदि वा सपापे ॥ जलग्रहेणापि युते खरवेशे बलेन हीने जलराशिमग्नः ॥५७॥ सरित्स्थानाधिपे लग्ननाथ-
नसहिते खरवे ॥ कर्माधिपेन संदृष्टे नदीकूपतटादिषु ॥५८॥ पतनं कूपनद्यादौ खरवेशस्थानराशिपः ॥ सरित्स्थाने शसंदृष्टे
यदि वा खरपेन युक् ॥५९॥ शिलाप्रहारस्तस्य स्यान्नूरविभौमान्विते खरवे ॥ दृष्टे युते कर्मपेन सरित्स्थानाधिपेन वा ॥६०॥
खरवेश राहुमंदाभ्यां सहिते कुजवीक्षिते ॥ शुभदृष्टिविहीने तु शिलाभिः पीडितो नरः ॥६१॥ केंद्रस्थिते राशिकरे भृगो वा पाप
पान्विते पापनिरीक्षिते वा ॥ क्रूरांशके नात्यवरोहभागे सो यजनन्यासहसंगमेति ॥६२॥ पापेक्षिते पापयुते द्वाशांके दिवाकरे वाप

दिकेंद्रगशो ॥ क्रूरेसुखेवायदिपापदृष्टेजातोनरःस्यादिहमातृगामी ॥६३॥ पापेक्षितेवासुखभावनाथेपापान्वितेसौम्यदृशाविहीने
दारेश्वराद्व्ययपतौविहीनेजातोनरोमातृसमानगामी ॥६४॥ सहोदरीसंगममाहुरन्येदारेश्वरेक्रूरयुतेसुखस्थे ॥ पापेक्षितेपापसमा
नमेवाक्रूरादिषष्ट्यंशसमन्वितेवा ॥६५॥ सुखेशनौपापनिरीक्षितेवापापान्वितेनाद्दृशपापयुक्तः ॥ पापग्रहाणांभवनेसुखेतुक्रूरा
दिषष्ट्यंशयुतेनथैव ॥६६॥ षष्ठेशाम्नंदनसंयुते ऽस्सुखवास्थितेपापनिरीक्षितेवा ॥ चंद्रांशसंयुक्तनवांशनाथेनथाविधेमातरिदो
पमाहुः ॥६७॥ सुखेश्वरेराहुयुतेसपापेशनैश्वरेणापिदिवाकरेण ॥ मातान्यसक्तासुखराशिनाथसंयुक्तभागाधिपतेनथैव
॥६८॥ सुखेश्वरेलग्नगतेबलाढ्येगुर्विदुसौम्यास्फुजिदर्कदृष्टे ॥ वैशेषिकांशेशुभदृष्टियुक्तेपतिव्रतानस्यभवेत्सावित्री ॥६९॥
नथाविधेशीतकरेसराहुकेतौसवित्रीयदिनीचसक्ता ॥ मंदेनयुक्तेसतिशूद्रसक्तावैश्येनसक्ताशशिसूनुयुक्ते ॥७०॥ रव्यान्विते-
क्षत्रियजातिसक्ताशुक्रेज्ययुक्तेद्विजपुंगवेश्च ॥ धरासुतेनापितथाविधेनवक्तुंफलंनाद्दृशमेवसत्यम् ॥ ७१॥ षष्ठेश्वरेणसहितेसु-
खराशिनाथेभाग्यस्थितेजनकमत्रविटंकरोति ॥ भाग्याधिपेनसहितेयदिमातृनाथेसोरव्यस्थितेजनकमत्रविटंकरोति ॥७२॥
लग्नेशभाग्येशसुखेशयुक्तेषष्ठाधिपेस्यात्परजातएव ॥ तदंशनाथेनयुतेतदीशेपापेक्षितेस्यात्परजातएव ॥७३॥ पापांशनेरमा- 
तृगृहेतदीशेतत्कारकेवाशुभदृष्टियुक्ते ॥ लग्नेश्वरान्हीनबलेशुभेशेजातस्तदानीपरजातएव ॥७४॥ नवीक्ष्यतेतद्गुरुणाविलग्नं

निशाकरो वा गुरुणा न दृष्टः ॥ दिवाकरेणाधियुते शशांके सपापचंद्रे रविणा तथैव ॥७५॥ पापे शुभे मातृगृहे सपापे लग्नेश्वरे हीनबले
सपापे ॥ परांशकादोस्फुरवभेन दानीं जातो नरः स्यात्परजात एव ॥७६॥ मातृस्थाने शुभयुते कारके शुभसंयुते ॥ तद्भावपे बला
ढ्ये वा मातुरायुष्यमादिशेत् ॥७७॥ चंद्रे बलिष्ठे यदि वा भृगौ वा सौम्येक्षिते शोभनभागयुक्ते ॥ चतुष्टये मातृगृहाच्छुभाढ्ये मातु
श्चदीर्घायुरुदाहरंति ॥७८॥ भावेशसंयुक्तनवांशनाथयुक्तांशपे केंद्रयुते बलाढ्ये ॥ तस्मिन् शशांकाद्यदि केंद्रयुक्ते मातुश्च
दीर्घायुरुदाहरंति ॥७९॥ पापांतरे पापयुते शशांके पापेक्षिते मातृगृहे विनाशः ॥ शुक्रात्तथैव प्रवदंति संतस्तत्स्थानपाद्वा कु-
थयंति शेषम् ॥८०॥ निशाकरात्पापयुते स्मरे वा भृगोस्तथैवं जननीविनाशम् ॥ स्फुरवशानौ मातृविनाशमेति पापेक्षिते चेदचिरे-
णनाशः ॥८१॥ शुभेक्षिते स्वेच्चिरकालमृत्युमुदाहरंत्यत्र महानुभावाः ॥ पापग्रहाणां भवने शनौ तु पापान्विते मातृविनाशमेति ८२
मातृस्थानाधिपस्थांशराशीशो यनवांशके ॥ तदंशनाथकिरणान्मातृकालं विनिर्दिशेत् ॥८३॥ नाथकारकराशीनां मध्ये योब-
लवान्भवेत् ॥ यावानंशस्तदंशस्थान्मेपादौ न त्रमृत्युदः ॥८४॥ वक्रे तु द्विगुणं प्रोक्तं त्रिगुणं त्वतिवक्रगे ॥ चतुर्गुणं शुभैर्दृष्टे का
लमेवं विनिर्दिशेत् ॥८५॥ हृदये पापसंयुक्ते पापदृष्टे नदीश्वरे ॥ पापांतरे वा हृदये तत्कालापमृत्युं विनिर्दिशेत् ॥८६॥ शन्याररा
हुसंयुक्ते हृदये शुभवर्जिते ॥ तथैव तद्भावनाथे तत्कालापमृत्युं विनिर्दिशेत् ॥८७॥ पापे कर्मेश्वरे सौरव्ये कपटी पापवीक्षिते ॥ सपा

परंध्रपेसोरव्येकापत्यंपापसंयुते ॥८८॥ भानुनाक्षीणचंद्रेणसहितेहृदयेयदा ॥ कपटीक्षणमात्रंतुनिष्कापत्यंतदूर्ध्वतः ॥८९॥
हृदयेशुभसंयुक्तेस्वोच्चमित्रगृहान्विते ॥ शुभग्रहाणांक्षेत्रेवानिष्कापत्यंविनिर्दिशेत् ॥९०॥ विशुद्धहृदयःशांतोहृदयेशे
बलान्विते ॥ गोपुराद्यंशकेवापिमृद्वंशादियुतेतथा ॥९१॥ लग्नेश्वरेहृद्गतेवाशुभयुक्तेक्षितेपिवा ॥ पारावतादिभागस्थेनि-
ष्कापत्यंविनिर्दिशेत् ॥९२॥ लग्नगुरोर्दानवपूजितेनयुक्तेयदातस्यविशुद्धचित्तम् ॥ पापेस्करवेनष्टवनाधिनाथेपापान्वितेतन-
स्यविरुद्धचित्तं ॥९३॥ राहोस्करवेपापदृशासमेतेबहिर्विशुद्धस्त्वनितान्तभाति ॥ अंतर्गतंतत्कपटंवदंतिपापबहुत्वस्करवरा-
शियुक्ते ॥९४॥ यदालग्नस्करवेशौवामित्रभूतौपरस्परम् ॥ शुभेक्षितौशुभयुक्तौमातृस्नेहंविनिर्दिशेत् ॥९५॥ लग्नेश्वरेण-
संदृष्टेमातृनाथेचतुष्टये ॥ शुभग्रहान्वितेदृष्टेमातृस्नेहंविनिर्दिशेत् ॥९६॥ शत्रुश्चेल्लग्ननाथस्यमातृलाभाधिपोयदि ॥
पापेक्षितेपापयुतेनच्छत्रुत्वंविनिर्दिशेत् ॥९७॥ लग्नेशान्नाशराशिस्थेमातृस्थानाधिपेयदि ॥ नष्टेवलग्नभावाद्वानच्छत्रु-
त्वंविनिर्दिशेत् ॥९८॥ वाहनेशेबलयुतेवाहनेशुभसंयुते ॥ शुभग्रहेणसंदृष्टेवाहनादिफलंभवेत् ॥९९॥ स्कवर्णवस्त्राभरणा-
दियानंशुक्राद्वदेत्तत्स्करवराशिनोवा ॥ संदोच्चतुर्थाधिपतौविलग्नेलग्नेश्वरेणापियुतेस्वलाभः ॥१००॥ शुक्रेणयुक्तेयदिवाहने
शेदेहान्वितेवानरवाहनादि ॥ देवेंद्रपूज्येनयुतेत्रलब्धेवदंतिसंतश्चतुरंगयानम् ॥१॥ चंद्रामरेज्यामरशत्रुपूज्येयुक्तेननोवायदि

वाहनेशे ॥ प्रोक्तं त्रयं वाहनमाहुरार्या नीचारिमूढादिविहीनखेटैः ॥२॥ भाग्येशलग्नेशचतुर्थनाथाः कर्मस्थिता नीचविमूढहीनाः ॥ कर्मे-
श्वरेणापि युते विलग्ने सिंहासनप्राप्तिमुदाहरंति ॥३॥ भाग्यस्थिते वाहनराशिनाथे सशुक्रजीवे स्वखराशियुक्ते ॥ भाग्याधिपे कोण
चतुष्टये वा बह्वर्थदेशाभरणार्थयानम् ॥४॥ भाग्याधिपेन सहिते यदि वाहनेशे जीवेक्षिते तनुगते बलपूर्णयुक्ते ॥ स्वक्षेत्रतुंगसहिते यदि
वा त्रिकोणे भूनाथमानववशाद्धनवाहनादि ॥५॥ भाग्येश्वरेणापि युते सुखेशे यत्र स्थिते पश्यति वा सुखर्क्षम् ॥ वैशेषिकांशे यदि वा
बलाढ्ये सर्वार्थभाग्यान्वितवाहनः स्यात् ॥६॥ दुःस्थे विमूढे यदि वाहनेशे भाग्येश्वरेणापि समीक्षिते वा ॥ दुर्वाहिनी चंचलवा-
हिनी वा लाभाधिपेनापि समीक्षिते वा ॥ ७ ॥ सौख्याधिपे शोभनखेचरेण भाग्येश्वरेणापि युतेऽथवा स्यात् ॥ सेनाबहुलसमुपे
निजातो बहुलदेशाभरणानि यानम् ॥८॥ भाग्येश्वराल्लाभगते विलग्ननाथे सुखेशे यदि भाग्यराशौ ॥ सुखाय भाग्ये तनुनायके वा
त्वसंख्ययानादियुतः प्रसिद्धः ॥९॥ सुखेश्वरे केंद्रगते नदीशे लग्नस्थिते वा बहुवाहनाढ्यः ॥ कर्मेश्वरे लग्नगते नदीशे कर्मस्थिते
वा बहुवाहनाढ्यः ॥१०॥ सुखेश्वरे सौम्ययुते सुखस्थे शस्त्राश्वकोशाधिपतिर्भवेत्तु ॥ क्षेत्रेश्वरे लाभगते बलाढ्ये बंधाभवे-
वाक्षिनि सूनुयुक्ते ॥११॥ भूसूनुराशौ यदि वा सुखेशे राज्यार्थसौख्याभरणादियानम् ॥ सौम्ये विलग्ने सबलप्रयुक्ते धर्मा
न्विते शोभनखेचरेंद्रे ॥१२॥ स्वोच्चस्थिते वित्तपतौ च केंद्रे सिंहासनप्राप्तिमुदाहरंति ॥ सौम्येक्षिते धर्मगृहे तनुकेंद्रे सा वित्तपाः शो

भनरवेचरेंद्राः॥ उच्चेगृहेवाधनराशियुक्तेसिंहासनप्राप्तिमुदाहरंति॥ केंद्रेशुभाः पापग्रहास्त्रिषष्ठलाभस्थितास्तत्पदमाहुरार्याः ॥१४॥ गेहेशेव्ययराशिस्थेपिनाद्यन्यविदेशगः॥ अष्टमस्थेगृहेशेवास्त्वयंसंपादयेद्गृहम् ॥१५॥ धनेशेलग्नभावस्थेकर्मेशे धनमाश्रिते॥वाहनेस्वोच्चखेटस्थेवाहनाधिपतिर्भवेत्॥१६॥ लग्नवाहनभाग्येशास्त्वन्योन्यंकेंद्रमाश्रिताः॥ लग्नना थेबलाढ्येवावा हनाधिपतिर्भवेत्॥१७॥ गोपुरांद्यंशकेवापिवाहनेशेबलान्विते॥ लाभकर्मशुभाधीशेदृष्टेवाहनसंयुतः॥१८॥ परमोच्चांशकेयु क्तेभाग्येशेकेंद्रमाश्रिते॥ ग्रहद्वयेतुंगयुतेबहुवाहनतुंगभाक्॥१९॥ धनाधिपेनसंयुक्तेव्ययेशेस्वोच्चराशिगे॥ भाग्याधिपेन संदृष्टेवाहनाधिपतिर्भवेत्॥२०॥ कर्माधिपेचतुर्थस्थेलाभनाथेनसंयुते॥ भाग्यनाथेनवायुक्तेबहुवाहनदेशभाक्॥ उच्चद्वयेक मगतेलग्ननाथेनवीक्षिते॥भाग्याधिपेनवादृष्टेवाहनाधिपतिर्भवेत्॥२२॥ सिंहासनांशकगतेकर्मवाहनराशिपे॥ लग्नेश्वरेण संदृष्टेबहुवाहनदेशभाक्॥ वाहनार्थेतृतीयेषुभाग्यकर्मभवाधिपाः॥ स्थिताबाल्येर्थमानादिसंयुक्तोनिधनेशुभे॥२४॥स्वो च्चेस्फुरवेशेतन्नाथेकेंद्रकोणसमन्विते॥वाहनतुंगसंयुक्तेव्ययेशेद्विगुणयानभाक्॥२५॥ परमोच्चांशकेशुक्रेकर्मेशेगृहसंयुते संभवेनादृशेयोगेवाद्यघोषादिभिर्युतः॥२६॥ शंखवादित्रघोषाद्यैःसंयुक्तेभाग्यपेस्फुरवे॥ केंद्रेचकोणगेवापिकर्मेशेवाहना न्विते॥ शनिनासंयुतेकर्मनाथेकेंद्रशुभान्विते॥ लग्नेशेवृद्धिंभयातेपणघादिरवैर्युतः॥२८॥ कर्मभाग्यविलग्नेषुस्वोच्चेसौ-

म्यग्रहाःस्थिताः ॥ दृष्टे शुभे लग्नपेन यानानंतं दुःखमाप्नुयात् ॥२९॥ कर्मषट्सोदरसुखभाग्यलग्नव्ययेश्वराः ॥ सुताधिपेन सहिता
श्च सुख्याद्यात्मदेशभाक् ॥३०॥ सुखेशे शुभयुते नाथे केंद्रकोणोच्चसंयुते ॥ भाग्येशे परमोच्चांशे सुखयानादिलाभभाक् ३१
मानेशे सुखराशिस्थे लाभे सौख्येशसंयुते ॥ लग्नेशे शुभेन संदृष्टे बहुयानादिलाभभाक् ॥३२॥ मृदंगभेरीशंखवाद्यकोलाहलादि
रवैर्युतः ॥ राजयोगे समुद्भूते कर्मपे सौख्यसंयुते ३३ बलाबलाच्छोभनदृष्टियोगात्तुर्योक्त तृतीयस्य फलं तु राशेः ॥ चतुर्थराशेश्च
फलं तथैव श्रीव्यंकटेशेन निरीक्ष्य सर्वम् ॥३४॥ ७ ॥ इति श्रीसर्वार्थचिंतामणौ चतुर्थोऽध्यायः समाप्तः ॥ ७ ॥४॥ ७ ॥
॥ ॥ अथ सुतभावः ॥ सुतभवनात्सुतबुद्धिमंत्रिणामपि मंत्रभोजनपितृभावान् ॥ हृदयोदरप्रवेशांविवेकशक्तिंच निर्दिशे-
न्मतिमान् ॥१॥ नाथैः कलत्रात्मजधर्मभानां पुत्रादिचिंतां कथयेत्स जीवः ॥ बुद्धिं तथा सौमसुतात्मजाभ्यां पितुस्तथैवात्मजभा
ग्यसूर्यैः ॥२॥ पितुर्धनं याति सुखेस्सभानौ पुत्रेशशांके मरणंच मातुः ॥ सुतेशशुभेशौ भनदृष्टियोगे पुत्रं ददात्येव नदानदीशौ ३
पुत्रस्थाने नदीशे वा गुरौ वा शुभवीक्षिते ॥ शुभेन सहिते वापि पुत्रप्राप्तिर्न संशयः ॥४॥ लग्नेशे पुत्रभावस्थे पुत्रेशे बलसंयुते ॥ परि
पूर्णबले जीवे पुत्रप्राप्तिर्न संशयः ॥५॥ पुत्रस्थानाधिपे जीवे परिपूर्णबलान्विते ॥ लग्नाधिपेन वा दृष्टे पुत्रप्राप्तिर्न संशयः ॥६॥ वैशेषि
कांशके जीवे पुत्रेशे पितयास्थिते ॥ शुभग्रहेण वा दृष्टे पुत्रप्राप्तिं समादिशेत् ॥७॥ पुत्रस्थानगते वित्तनाथे पूर्णबलान्विते ॥

दृष्टेदेवेंद्रगुरुणापुत्रप्राप्तिर्नसंशयः ॥८॥ लग्नपुत्राधिपौयुक्तावन्योन्यंवापिवीक्षितौ ॥ क्षेत्रेपरस्परस्थौवा पुत्र प्राप्तिर्नसंशयः ॥ ९ ॥
लग्नपुत्राधिपौकेंद्रे शुभग्रहसमन्वितौ ॥ कुटुंबेशेबलाढ्येतुपुत्रप्राप्तिर्नसंशयः ॥१०॥ पुत्रस्थानाधिपस्थांशराशीशेशुभसंयुते
शुभेनवीक्षितेवापिपुत्रप्राप्तिर्नसंशयः ॥११॥ लग्नेशेदारभावस्थभाग्येशेदारसंयुते ॥ द्वितीयेशेऽधिलग्नस्थेपुत्रप्राप्तिर्नसंश
यः ॥१२॥ दारेशग्रहसंयुक्तनवांशभवनाधिपं ॥ भाग्यवित्तविलग्नेशैर्दृष्टेनतुप्राप्तिमादिशेत् ॥१३॥ पापमध्येतुनष्टाववनदी
शापिनथास्थिते ॥ कारकेपापसंयुक्तेपुत्रनाशंवदेत्तदा ॥१४॥ भाग्यपुत्रकलत्रेशासंयुक्तनवभागपाः ॥ पापांशगाःपापयुताः
पुत्रनाशंवदेत्तदा ॥१५॥ क्रूरांशेपुत्रभावेशेनीचमूढसमन्विते ॥ पापैर्दृष्टेथवादुःस्थेपुत्रनाशंवदेत्तदा ॥१६॥ व्ययेशसंयुतांशेशा
व्यंशनाथसमन्विते ॥ दृष्टेपुत्रेश्वरेतेनपुत्रार्तिंकथयंतिहि ॥१७॥ पुत्रस्थानाधिपेदुःस्थेक्रूरषष्ट्यंशसंयुते ॥ क्रूरग्रहेणवादृष्टे
पुत्रनाशंवदेत्तदा ॥१८॥ मृदंशादिसमायुक्तेपुत्रस्थानेश्वरेदृढे ॥ गोपुराद्यंशकेवापिपुत्रसिद्धिर्नसंशयः ॥१९॥ पुत्राधिप-
स्थांशपनोविलग्नलग्नेश्वरस्थांशपतौसकेंद्रस्थे ॥ गुरुस्थितांशाधिपतौत्रिकोणे पुत्राप्तिमाहुर्मुनयोमहांतः ॥२०॥ पारावतांशादि
युतेस्तनेशेभाग्येश्वरेतादृशभावयुक्ते ॥ लग्नेश्वरेशोभनदृष्टियुक्ते पुत्राप्तिमाहुर्मुनयोमहांतः ॥२१॥ वंशाक्षयादिसहितेयदिस २५
त्यमेतत्शास्त्राधिपारगमनामुनयोवदंति ॥पुत्रादियोगमखिलंतदभावयोगंप्रोक्तंविलोक्यमनसाचवदेत्सविद्वान् ॥२२॥

वंशास्यविच्छेदकरः प्रजानः चंद्रा स्फुजित्पापखगाः क्रमेण ॥ खं १० दार ७ सौख्येषु ४ युतास्तथैवलग्नेश्वरेस्वचंद्रस्कतेनयुक्ते २३
पापग्रहारिः फस्कताष्टमस्था वंशास्यविच्छेदकरोर्थहीनः ॥ निशाकरेलग्नगतेसजीवेनत्समेभूमिसुतेशनौवा ॥२४॥ पापग्रहा
बंधुगनाश्चसर्वेवंशस्यविच्छेदकरोत्रजातः ॥ लग्नांत्यपुत्राष्टमराशियुक्तेःपापग्रहेवंशविनाशहेतुः ॥२५॥ शुभेनरारंध्रबलप्ररिः
फेवंशस्यविच्छेदकरःसुतेज्ञ ॥ दारस्थितेसोमसुतेसशुक्रेपापेसुखेदेवगुरौसुतस्थे ॥२६॥ रंध्रेशशांकात्सहितेतुपा-
पैर्वंशस्यविच्छेदकरोत्रजातः ॥ पापेविलग्नेसुखगेशशांकेलग्नेश्वरेपंचमराशियुक्ते ॥२७॥ बलैर्विहीनेयदिपुत्रनाथेवंशस्यवि
च्छेदकरोत्रजातः ॥ क्षीणेशशांकेतनुभावयुक्तेमूर्द्धान्वितेमंदगृहेसुरेज्ये ॥२८॥ त्रिकोणगेःपापखगेश्चसर्वेःप्रागेवपुत्रस्य-
सुखाद्विनाशः ॥ चंद्रात्मजेपंचमराशियुक्तेलग्नेसुखेवायदिपापयुक्ते ॥२९॥ शुभेनरेःपंचमभावयुक्तेनदृश्यतेपुत्रसुखंहिने
न ॥ जातोयदिस्यात्क्षितिसूनुलग्नेरंध्रेशनौपंचमगेरवौवा ॥३०॥ पुत्रादिलाभंमुनयोवदंतिकालांतरेशोभनदृष्टियोगात् ॥
लग्नेशनौदेवगुरौतुरंध्रेव्ययेकुजेपुत्रलाभश्चिरेण ॥३१॥ बुद्धिस्थानाधिपेसौम्येशुभदृष्टिसमन्विते ॥ शुभग्रहाणांक्षेत्रेवाबुद्धि
मान्नीतिमान्भवेत् ॥३२॥ परमोच्चांशकेबुद्धिस्थानेनायेनवीक्षिते ॥ शुभग्रहाणांमध्यस्थेतीव्रबुद्धिंसमादिशेत् ॥३३॥ का
रकेवलसंपूर्णेनदांशेशुभवीक्षिते ॥बुद्धिस्थानेथवारोम्येतीव्रबुद्धिंसमादिशेत् ॥३४॥ बुद्धिस्थानाधिपस्याथराशीशेशु-

भवीक्षिते ॥ वैशेषिकांशके वापि नीव्रबुद्धिं समादिशेत् ॥ ३५॥ कारकस्थितराश्यंशनाथे केंद्रत्रिकोणगे ॥ बुद्धीश्वरेण संदृष्टे तीव्रबु-
द्धिं समादिशेत् ॥ ३६॥ शुभग्रहाणां मध्यस्थे बुद्धिराशौ शुभान्विते ॥ गुरौ केंद्रत्रिकोणे वा बुद्धिमार्गविशारदः ॥ ३७॥ बुद्धि-
स्थानाधिपे सौम्ये बुद्धिराशिगते गुरौ ॥ शुभग्रहाणां मध्यस्थे भावे बुद्धिर्विनिर्दिशेत् ॥ ३८॥ बुद्धिस्थानेश्वरे केंद्रे शुभग्रह
समन्विते ॥ उच्चग्रहसमायुक्ते ग्रहणादिपटुर्भवेत् ॥ ३९॥ मृद्वंशादिसमायुक्ते नाथकारकखेचरे ॥ शुभग्रहेण संदृष्टे धार-
णादिपटुर्भवेत् ॥ ४०॥ गोपुरांशके वापि धारणादिपटुर्भवेत् ॥ परे गिनज्ञो मेधावी कारकस्थितभागपे ॥ ४१॥ केंद्रत्रिकोणसं
युक्ते कारकग्रहवीक्षिते ॥ नाथकारकसंयुक्ते त्र्यंशभागपतौ शुभे ॥४२॥ चतुष्टये त्रिकोणे वा शुभदृष्टे गिनज्ञ ह्लन् ॥ पंचमे पाप-
संयुक्ते नदीशे पापसंयुते ॥ ४३॥ क्रूरषष्ठ्यंशके वापि बुद्धिनाशो भवेत्तदा ॥ नीचमूढारिगेहस्थे पापखेचरवीक्षिते ॥ ४४॥ क्रूरषष्ठ्यं
शसंयुक्ते बुद्धिनाशो भवेत्तदा ॥ पंचमे मंदसंयुक्ते लग्नेशे मदवीक्षिते ४५ नदीशे पापसंयुक्ते बुद्धिजाड्यं समादिशेत् ॥ मंदमांद्यसु
संयुक्ते पंचमे शुभवर्जिते ॥ ४६॥ नदीशे पापसंदृष्टे विस्मृतिः प्रायशो भवेत् ॥ बुद्धिर्विस्मृतिपूर्वा स्यात्कारके शुभसंयुते ॥ ४७॥
नदीशे पापसंयुक्ते क्रूरषष्ठ्यंशकेऽपि वा ॥ सौम्येन तु बुद्धिभावस्थे गुरुशुक्रनिरीक्षिते ॥ ४८॥ तादृशे बुद्धिनाथे वा सर्वेषां बुद्धिदो
भवेत् ॥ ऊहापोहसमर्थः स्यान्नदीशे गोपुरांशके ॥ ४९॥ कारकस्थितराशीशे लग्ननाथेन वीक्षिते ॥ राजमंत्री भवेद्दाना वाक्प

नौबलसंयुते ॥ बुद्धीश्वरेण संयुक्ते गोपुराद्यंशकान्विते ॥ आगामीसूचको मंत्री कारके केंद्रकोणगे ॥ भृगोसौम्यसमायुक्ते दृष्टेना-
भ्यां शुभांशके ॥ त्रिकालज्ञो भवेज्जीवस्त्वंशे मृदंशसंयुते ॥५२॥ गोपुराद्यंशके वापि शुभांशे शुभवीक्षिते ॥ पुंग्रहे पुंग्रहे प्राप्ते
पुंभागे पुत्रनायके ॥ स्फुपुत्रजननं विद्यात्प्रथमं नात्र संशयः ॥५३॥ स्त्रीराशौ स्त्रीग्रहे प्राप्ते स्त्रीभागे पुत्रनायके ॥ दारिकाप्रथमं
विद्यात्सदाशेषंढमादिशेत् ॥५४॥ कारकस्थितराशेर्वा पञ्चमे बिंदुसंख्यया ॥ नीचारिमूढगेहानां बिंदुं त्यक्त्वा स्फुटान्वदेत् ५५
पुत्रस्थाने शुभकिरणात्पुत्रभावाशकाद्वदेत् ॥ रश्मिजालैर्गुरोर्वापि बलोत्कर्षाद्वदेत्तथा ॥५६॥ लग्नपुत्रेश्वराभ्यां तु मित्रत्वेनैव मित्र
ता ॥ शत्रुत्वे शात्रवं प्रोक्तं समत्वे समता भवेत् ॥५७॥ लग्नपुत्रेश्वरौ खेटौ परस्परनिरीक्षितौ ॥ परस्परगृहांशस्थौ शुभभूषाकार-
येत्स्फुटः ॥५८॥ लग्नं पश्यति वा पुत्रनाथे लग्नान्विते यदि ॥ लग्नेश्वरस्फुटनक्षत्रे वा पुत्रवाक्यवशानुगः ॥५९॥ पुत्रस्थानेश्वरे दुस्थे-
लग्नेशेनापि वीक्षिते ॥ संदृष्टे कुजराहुभ्यां नित्यं पितृविदूषकः ॥६०॥ पञ्चमे गुरुशुक्राभ्यां सवित्रासहिते तथवा ॥ एतेषां भवने वा
पि सोयं योजयिता भवेत् ॥६१॥ तृतीयेशे तृतीयस्थे पञ्चमेशे स्वर्गगते ॥ शुभोच्चखेटसंयुक्ते जातो भोजयिता भवेत् ॥६२॥ अ
न्नदानपरो नित्यं पञ्चमेशे शुभांशगे ॥ शुभग्रहैः समायुक्ते युक्तांशे शुभसंयुते ॥६३॥ हृदये पापसंयुक्ते तदीशे पापसंयुते ॥
पापग्रहाणां मध्यस्थे हृद्गतरोगमादिशेत् ॥६४॥ तन्नाथे नाशभावस्थे नाशस्थानेशसंयुते ॥ नीचारिमूढभावे वा हृद्गतरोगमादि

शेत् ॥६५॥ तदंशस्थांशराशीशेक्रूरषष्ठ्यंशसंयुते ॥ क्रूरग्रहेणसंदृष्टेतद्धतंशल्यमादिशेत् ॥६६॥ ॥ इतिसुतभावः ॥ ॥

॥ अथषष्ठभावविचारः ॥ ॥ अरिभवनादरिचोरक्षतविघ्नक्लेशनाभ्युदरदेशान् ॥ मधुरादिषड्रसदेशान्ग्रहराशियुदितान्वदेत्प्रा-
ज्ञः ॥१॥ षष्ठेश्वरेक्रूरयुतेविलग्नेरन्ध्रस्थितेवाव्रणदः शरीरे ॥ कर्मस्थितेतातदशस्वचरेद्रेव्रणप्रदोंगेशभदृष्टियुक्ते ॥२॥ पित्रादि-
भावादपियोजनीयंभावेशतत्कारकदृष्टियोगात् ॥ बलाबलेनापिविकल्प्यसर्वंतेषांव्रणंतत्कथयंतितज्ज्ञाः ॥३॥ शिरोक्षादे
मुखंकंठश्रोत्रनासाचगुह्यकम् ॥ पाणीपार्श्वौहृदंशोपादौप्रपदौकुक्षिमादिशेत् ॥४॥ लग्नेशभूसुतशशांकयुताःसहस्थिताःसौख्य
गृहेव्ययेवा ॥ अपानरोगंत्वथवापवित्रंपश्यंतिषष्ठंमुनयोवदंति ॥५॥ शशांकतत्सुतविलग्ननाथाःसराहवःकेतुयुतास्तु
दंगे ॥ वैश्यंतुकुष्ठंमुनयोवदंतिशशीभेक्षितास्तत्रभवेत्तदानीम् ॥६॥ विनाविलग्नाधिपतिंग्रहेषुलग्नस्थितेषत्रतुकुष्ठभाक्स्या
त् ॥ पित्रादिकानांफलमेवमाहुर्मुनीश्वराःकारकभावनाथैः ॥७॥ पैत्यंतुकुष्ठंकुजसंयुतेषुशैत्यंभवेन्मंदसमन्वितेषु ॥ रक्तंत
दास्तूर्यसमन्वितेषुग्रहोत्कदंशोनियतंतदाहुः ॥८॥ लग्नेशषष्ठाधिपतीदिनेशयुक्तौज्वरंचंद्रसमन्वितौचेत् ॥ जलेनगंडक्षिति
सूनुयुक्तेयुद्धेनवास्फोटकराशिभिर्वा ॥९॥ चित्तेनरोगेणबुधेनयुक्तौनिर्व्याधिकोजीवसमन्वितौचेत् ॥ शुक्रेणभार्याविप
दंवदंतिमंदेननीचानिलरोगमाहुः ॥१०॥ सराहुकेतुर्यदिसर्पपीडांचोराग्निभीर्वातभयात्प्रमादः ॥ षष्ठेश्वरश्चंद्रसुतेनयुक्तःसा

गुर्विलग्नेस्वयमत्रशिश्नम् ॥११॥ छिन्नत्वसौसौम्यदृशाविहीनेसभूमिपुत्रेयदिलिंगरोगात् ॥ कामेश्वरः शुक्रसुतोरिपुस्थः कलत्र-
षंदत्वमुदीरयंति ॥१२॥ षष्ठेशलग्नाधिपतीसमंदौकेंद्रत्रिकोणेयदिबंधनंस्यात् ॥ सराहुकेतूयदिकेंद्रकोणेवदंतितज्ज्ञाः निगडंत-
दानीम् ॥१३॥ पित्रादितत्कारकभावनाथः पित्रादिकानां फलमाहुरन्ये ॥ तत्तद्ग्रहाणांपरिपाककालेत्वंतर्दशायामथवावदंति १४
धर्मेशनौवासगरौतृतीयकरच्छिदार्केनिधनेव्ययेवा ॥ विधौकलत्रेनिधनान्वितेवाकुजेनयुक्तेयदिवासजीवे ॥१५॥ कर्मस्थिता-
श्चंद्रादिराहुमंदसौम्याः पदच्छेदयुतोत्रजातः ॥ शुक्रेज्यदृष्टेदिवसाधिनाथेसारेशनौवाफणिनाथयुक्ते ॥१६॥ क्रूरादिषष्ठ्यंशसम-
न्वितेवाविच्छेदनंतच्छिरसोवदंति ॥ मंदेविलग्नेमदनेसराहौकर्मान्वितेभार्गवनंदनेच ॥१७॥ कृष्णेशशांकेमदराशियुक्तेवि-
च्छिन्नहस्तः सभवेत्सदन ॥ मूर्त्तौतुलग्नेयदिवातदंशेसूर्यान्वितेकृष्णनिशाकरेतु ॥१८॥ फणींद्रचंद्रात्मजसंयुतेनकेरश्म्या-
भिभूतेह्युदरस्यभेदः ॥ मंदोदयेसौम्यदृशाविहीनेसपार्कयुक्तेयदिकृष्णचंद्रे ॥१९॥ शस्त्रेणकुक्षेर्दलनंवदंतिजातस्यदर्शे-
मुनयोमहांतः ॥ क्षीणेशशांकेफणिनाथदृष्टेसौरेशिरस्थास्यनिकृंतनंस्यात् ॥२०॥ लग्नेशनौसामस्कृतेस्वगेहेशौ येचतुर्थेसबुधे
तिहृस्वः ॥२१॥ षष्ठाष्टमव्ययेचंद्रेलग्ननाथेनवीक्षिते ॥ मंदमाद्यगुसंयुक्तेतस्यदुर्मरणंवदेत् ॥२२॥ नीचारातिविमूढांशेमंदेपा-
पान्वितेक्षिते ॥ क्रूरषष्ठ्यंशसंयुक्तेतस्यदुर्मरणंवदेत् ॥२३॥ रंध्रेश्वरास्थितत्र्यंशेपाशसर्पादिसंज्ञके ॥ दृक्काणेमरणंव्याधिउद्बं

धान्मरणंवदेत् २४ मंदमांद्यगुरुसंयुक्तेरंध्रेशास्थत्रिभागपे ॥ नथाविधेर्केयुक्तेवाउद्बंधान्मरणंवदेत् ॥२५॥ षष्ठाष्टमेशेभौमेवाक्षिकर्मे
शासमन्विते ॥ मंदमांद्यगुरुसंयुक्तेक्रूरांशेयुद्धतोमृतिः ॥२६॥ युद्धेनमरणंब्रूयाच्छनियुक्तत्रिभागपे ॥ कुजेनवीक्षितेयुक्तेभौ
मक्षेत्रेनदृशाके ॥२७॥ रविभौमौनीचदान्योन्यपरस्परनिरीक्षितौ ॥ परस्परगृहांशास्थौद्वंद्वयुद्धान्मृतिंवदेत् ॥२८॥ अष्टमेबह
वःपापाभौमराशिगताशकाः ॥ क्रूरषष्ठ्यंशकयुताःसद्यस्तन्मरणंवदेत् ॥२९॥ नीचमूढारिगेहस्थाःसौम्याःसर्वेपराजिताः ॥
पापांशस्थाःपापयुताःसद्यस्तस्यमृतिंवदेत् ॥३०॥ सद्यःस्यान्मरणंतस्यशनिराहुदिनाधिपाः ॥ रंध्रेशवीक्षिताःसर्वेक्रूरांशा
न्मूढसंयुताः ॥३१॥ रोगस्थानगतेसूर्येनष्टेवापापसंयुते ॥ पापदृष्टियुतेभानौपित्तकाद्व्रणमादिशेत् ॥३२॥ तथाभूतेनिशाना-
थेक्रूरदृष्टेनदृशाके ॥ वातार्दितोभवेज्जातोरक्तपित्तार्दितःकुजे ॥३३॥श्लेष्मवातार्दितेसौम्येतथाभूतेविशेषतः ॥ जीवेतुविद्र
धिर्वाच्यः शुक्रेमूलातिसाररुक् ॥ ३४॥ तथाभूतेशनौगुल्मरोगोवात्रविशेषतः ॥ राहुकेतुसमायुक्तेबाधापैशाचिकीस्मृता
॥३५॥ चंद्रेषष्ठेकुजयुतेभ्रांतिःपंड्वादिरोगभाक् ॥ सार्केचंद्रेरवियुतेर्विसर्पाःशूलरोगभाक् ॥३६॥ षष्ठेकुजेबुधयुतेभृगुचं
द्रनिरीक्षिते ॥ क्रूरांशकसमायुक्तेक्षयरोगंवदन्तिहि ॥३७॥ शन्यारसहितेषष्ठेरविराहुनिरीक्षिते ॥ लग्नेश्वरेहीनबलेदीर्घरोगी
भवेन्नरः ॥३८॥ षष्ठेशनौसगुळिकेरव्यारफणिवीक्षिते ॥ शुभैर्नदृष्टेयुक्तेवाश्वासकासक्षयादिरुक् ॥३९॥ जलराशिगतेचंद्रे-

षष्ठेतद्भवनाधिपे ॥जलर्क्षसंस्थेऽनिंदादृष्टेमूत्रकृच्छ्रादिकंभवेत् ॥४०॥ षष्ठेचंद्रेशनौराहौव्ययेपापेविलग्नपे ॥ पापांशकसमायुक्तेपि
नसंरोगमादिशेत् ॥४१॥ बलहीनेरिनाथेवालग्नस्थेवाधरासुते ॥ मूर्धार्तिर्मुखरोगोवागुल्मोविद्रधिभाग्भवेत् ॥४२॥ षष्ठेश्व
रस्थितांशेशेरव्यादौहितथाभवेत् ॥ फलंपूर्वोक्तमप्यत्रक्रमात्तस्यविनिर्दिशेत् ॥४३॥ शत्रुस्थानाधिपेकेंद्रेपापग्रहनिरीक्षि-
ते ॥ षष्ठेवापापबाहुल्येशत्रुपीडांविनिर्दिशेत् ॥४४॥ लग्नेशेशत्रुराशिस्थेतदीशेलग्नमाश्रिते ॥ मंदमांद्यगुसंयुक्तेशत्रुपीडांविनि-
र्दिशेत् ॥४५॥ पापग्रहेणसंदृष्टेबलहीनेरिनायके ॥ पापांतरगतेवापिशत्रुपीडांविनिर्दिशेत् ॥४६॥ शत्रुस्थानाधिपेदुःस्थेनीच
मूढारिसंयुते ॥ लग्नेशेबलसंयुक्तेशत्रुनाशंवदेद्बुधः ॥४७॥ शुभग्रहेणसंदृष्टेशत्रुस्थानाधिपेयदा ॥ शुभान्वितेशुभक्षेत्रेनेन
मैत्रींवदेद्बुधः ॥४८॥ लग्नेशाद्बलहीनेतुशत्रुस्थानाधिपेयदा ॥ शुभान्वितेशुभैर्दृष्टेशत्रूणांमैत्रमादिशेत् ॥४९॥ लग्नेशेषष्ठ-
भावस्थेषष्ठेशेननिरीक्षिते ॥ नौवाविलग्नभावस्थोज्ञातिपीडांविनिर्दिशेत् ॥५०॥ गुरुशुक्रौविलग्नस्थौषष्ठभावेश्वरान्वितौ
शन्यारफणिसंदृष्टौज्ञातिपीडांविनिर्दिशेत् ॥५१॥ लग्नाधिपेशुभयुतेषष्ठेचंद्रेथवाशुभे ॥ केंद्रत्रिकोणगेसौम्येज्ञातिभिः
सहजीवनम् ॥५२॥ ज्ञातयोबहवःसंतिषष्ठेशेदेवपूजिते ॥ शुभान्वितेशुभैर्दृष्टेमृदुंशादिसमन्विते ॥ ज्ञातिक्षयंविजानी-
यात्षष्ठेशेपापसंयुते ॥ क्रूरांशनीचमूढादौशुभदृग्योगवर्जिते ॥५४॥ पारावतादिभागस्थेलग्नेशेशुभवीक्षिते ॥ ज्ञातीशे-

बलहीनेवानस्माद्दुत्कर्षतांव्रजेत् ॥५५॥ भाग्येशेषष्ठराशिस्थेषष्ठेशेनानिरीक्षिते ॥ षष्ठेशेमंदभौमाभ्यांयुतेचोराग्निपीडनम् ५६
नदीशेगोपुरांशादौदिवसेशेनवीक्षिते ॥ लग्नेशेबलसंपूर्णेज्ञातीनामुपकारकृत् ॥५७॥ षष्ठेसौम्येशुभैर्दृष्टेनदीशेशुभसंयुते
पापग्रहाणामध्यस्थेस्वपदंशभियोभवेत् ॥५८॥ उपदंशभियोनित्यंषष्ठेजीवेशशांकजे ॥ क्षेत्रेनयोर्वासंप्राप्तेमृदंशादिसमन्वि
ते ॥५९॥ देवेज्येषष्ठभावेशेशुक्रेवानस्यनायके ॥ मधुरादिभियोनित्यंगोपुराद्यंशकान्विते ॥६०॥ शुक्रेषष्ठसेसौम्येवाशुभ
दृष्टेशुभांशके ॥ बलान्वितेशुभांशास्थेनित्यंमधुरभाक्भवेत् ॥६१॥ पापग्रहेणसंदृष्टेबुधेमधुरवर्जिते ॥ बुधेनयुक्तेशुक्रेवात्वा
म्लभाक्सनरोभवेत् ॥६२॥ षष्ठेशुक्रेभौमदृष्टेभौमेशुक्रेनदन्विते ॥ दिवसेशेनवादृष्टेत्वाम्लभाक्सनरोभवेत् ॥६३॥ षष्ठे
शेभौमसंयुक्तेराहुकेतुनिरीक्षिते ॥ भौमक्षेत्रगतेवापिविभलभादिचौर्यभाक् ॥६४॥ राहुकेतुसमायुक्तेषष्ठेपापनिरीक्षिते ॥
क्रूरांशकेनदीशेवाविभलभादिचौर्यभाक् ॥६५॥ पुत्रादीनामिदंयोज्यंतत्तद्भावप्रकारकैः ॥ नास्तिकायनवक्तव्यंवक्तव्यंसु-
जनायवै ॥६६॥ अध्यायःपंचमःप्रोक्तःपंचषड्भाववाचकः ॥ विचित्रार्थसमायुक्तोवेंकटेशेनधीमता ॥६७॥ ॥ इतिस
र्वार्थचिंतामणौपंचमोऽध्यायः ॥ ॥५॥ ॥ अथसप्तमभावविचारः ॥ ॥ युवतिपदादुद्वाहंभार्यापतिस्वपदंधिगु
डक्षीरम् ॥ आगमगमनमदासिब्रूयान्मूत्राशयंचनष्टधनम् ॥१॥ शुक्रेकलत्रेव्रतिकामुकःस्याद्बुधेन्यदारेनिरतोगुरौतु ॥ स्व

दारसक्तोदिननाथपुत्रेकुदारसंस्थेशुक्रपतौसुदारः ॥२॥ कुजेनवकुस्त्रीषुरतःकुलघ्नोभानौकुटुंबीबहुदारसक्तः ॥ लग्नस्थिताविन्नकल
त्रशत्रुनाथाःसशुक्रायदिपापयुक्ताः ॥३॥ जातःपरस्त्रीषुरतःकुमार्गीशुभक्षितश्चेन्नतथाभवेच्च ॥ लग्नारिपोपापयुतोयदिस्या
ज्जातःपरस्त्रीषुरतःकुमार्गी ॥४॥ लग्नेश्वरेशत्रुकुटुंबनाथेपापेयुतेवायदिदारराशौ ॥ सौरेसपापेयदिदारनाथेजातःपरस्त्रीषुर
तःकुटुंबे ॥५॥ सराहुकेतौयदिदारनाथेपापेक्षितेवाव्यभिचारयोगः ॥ कर्मेशवित्तेशकलत्रनाथामानस्थिताजारमुदाहरंति ६
एकोग्रहस्तेषुचतुर्थराशौजातःपरस्त्रीगमनंप्रयाति ॥पुत्रेश्वरेदारपतौबलाढ्येदृष्टेयुतेवाप्यरिनायकेन ॥७॥ जातोनपत्यायदि
तत्कलत्रेजारात्सुतःस्याच्छुभखेटदृष्टे ॥दारेश्वरेपापयुतेकुटुंबेभौमेनदृष्टेयदिजारपुत्रः ॥८॥ धीधर्मनाथौसकलत्रनाथौदुस्था
नगौहीनबलौशुभेन ॥ दृष्टेस्तेदारबहुत्वयोगेल्पपुत्रयोगंमुनयोवदंति ॥९॥ क्षीणेशशांकेयदिपापयुक्तेदारस्थितेत्वन्यकलत्र
गामी ॥ लग्नेसपापेयदिदारनाथेजातःपरस्त्रीषुरतःकुमार्गी ॥१०॥ स्तेशेदारभंयातेनदीशेपापसंयुते ॥ शुक्रोबलविहीन
श्चेद्भार्यागर्भेणम्रीयते ॥११॥ नीचेस्तगोवायदिवाशशांकेनीचस्थितेत्राशुनिदारहानिः ॥ उद्बंधनात्तन्मरणंवदंतिदारेश्वरेपाश
फजंगमाख्ये ॥१२॥ द्रेष्काणभागेविषभक्षणाद्वामाद्यन्वितेदारपतौसराहौ ॥ स्वर्क्षेकुटुंबाधिपतौकलत्रनाथेयदाल्पककल
त्रभाक्स्यात् ॥१३॥ नाम्शांससमेतैर्ग्रहनायकैर्वाकलत्रसंख्यामवदंतिसंतः ॥ कलत्रनाथस्थितराशिनाथसंयुक्तखेटैरपिवाच्य

मेनत् ॥१४॥ कलत्रेशेबहुगुणेतुंगवक्रादिहेतुभिः ॥ बहुभार्यनरंविंद्यादुदयर्क्षगतेपिवा ॥१५॥ भार्याद्वयंवदेत्तत्रलग्नेशेनाशराशि
गे ॥ कलत्रेपापसंयुक्तेकुटुंबेशेनथाविधे ॥१६॥ शन्यारफणिसंयुक्तेकलत्रेशेयदाभवेत् ॥ क्रूरषष्ट्यंशकेवापिकलत्रमरणंवदेत्
१७ शुभग्रहेणसंयुक्तेकलत्रेशेरिनीचगे ॥ पापेकलत्रराशिस्थेविवाहद्वयमादिशेत् ॥१८॥ कारकेपापसंयुक्तेनीचराश्यंशकेपि
वा ॥ पापग्रहेणसंदृष्टेविवाहद्वयमादिशेत् ॥१९॥ कलत्रकारकश्चंद्रोज्ञोगुरुर्वाथवाभृगुः ॥ मध्येबलिष्ठयस्तेषांतस्मात्सर्वंनिरू
पयेत् ॥२०॥ कलत्रेवाकुटुंबेवापापदृग्योगसंभवे ॥ नदीशेबलहीनेतुकलत्रांतरभाग्भवेत् ॥२१॥ सप्तमेचाष्टमेपापेव्ययेभूसु
तसंयुते ॥ अदृश्येयदिनाथेनकलत्रांतरभाग्भवेत् ॥२२॥ वित्तेपापबहुत्वेतुकलत्रेवातथाविधे ॥ नदीशेपापसंदृष्टेकलत्रत्र
यभाग्भवेत् ॥२३॥ लग्नेकुटुंबेदारेवापापखेचरसंयुते ॥ दारेशेनीचमूढादौकलत्रत्रयभाग्भवेत् ॥२४॥ नीचमूढारिभागस्थे
लग्नेशेदारपेथवा ॥ क्रूरषष्ट्यंशकेवापिकलत्रांतरभाग्भवेत् ॥२५॥ दारेशस्थनवांशेशेनीचमूढारिभांशके ॥ पापांतरेपापदृ-
ष्टेकलत्रांतरभाग्भवेत् ॥२६॥ एवंकुटुंबनाथेनकारकस्यांशपेनवा ॥ पापांतरेदारगृहेतन्नाथेपिकलत्रहा ॥२७॥ लग्नेश्वरात्कर्म
गतेसोमपुत्रेबलान्विते ॥ दारेशाद्विक्रमेचंद्रेबहुस्त्रीसहितोभवेत् ॥२८॥ व्ययार्थेशौतृतीयस्थौगुरुणाचनिरीक्षितौ ॥ भाग्य ३०
नाथेनवादृष्टेबहुस्त्रीसहितोभवेत् ॥२९॥ केंद्रत्रिकोणेदारेशेस्वोच्चमित्रस्ववर्गगे ॥ कर्माधिपेनवायुक्तेबहुस्त्रीसहितोभवेत् ३०

लाभदारेश्वरेशौयुक्तौपरस्परनिरीक्षितौ ॥ बलाढ्यौवात्रिकोणस्थौबहुस्त्रीसहितोभवेत् ॥ ३१॥ भाग्येशोदारराशिस्थदारेशेशुक्रस्वभं
गते ॥ भावेशेलाभनाथेवाकेंद्रेबहुकलत्रभाक् ॥ ३२॥ दारेशासंयुक्तनवांशनाथयुक्तांशनाथेसतिसौम्ययुक्ते ॥ पारावतांशादि
गतेबलाढ्येजातःशतस्त्रीसहितोनरःस्यात् ॥ ३३॥ कुटुंबनाथस्थितराशिनाथसंयुक्तषष्ठ्यंशपतौबलाढ्ये ॥ मृद्वंशकेगोपुरभा
गयुक्तेजातःशतस्त्रीद्विगुणेनयुक्तः ॥ ३४॥ तत्कारकस्थांशपयुक्तराशिनाथस्थितांशाधिपतौचकेंद्रे ॥ मृद्वंशकेगोपुरभागयुक्ते
जातस्यवान्यात्रिशतीवधूनां ॥ ३५॥ दारेशगोपुरांशस्थकर्मेशोदारराशिगे ॥ तथाविधेकुटुंबेशेदशसंख्यकलत्रभाक् ॥ ३६॥
एवंपुत्रादिभावानांकलत्रादिकमादिशेत् ॥ दारेशेपापसंयुक्तेदारेवापापसंयुते ॥ ३७॥ दारेशस्थांशपेपापेकुस्त्रीभाक्सनरोभवेत् ॥
क्रूरषष्ठ्यंशकेदारनाथेकुस्त्रीयुतोभवेत् ॥ ३८॥ नीचांशेनीचसंयुक्तेदारनाथेचकारके ॥ कुस्त्रीयुतोभवेज्जातःशुभदृष्टिविव-
र्जिते ॥ ३९॥ दारेशेशुभसंयुक्तेशुभखेचरवीक्षिते ॥ शुभग्रहाणांमध्यस्थेसत्कलत्रादिभाग्भवेत् ॥ ४०॥ दारेशेशुभरा-
श्यंशेकारकेवातथाविधे ॥ कर्मेशेबलसंयुक्तेसकलत्रसमन्वितः ॥ ४१॥ स्वोच्चेमित्रेस्ववर्गेवागोपुराद्यंशकेभृगौ ॥ षष्ठ्यंशेमृदु-
भागस्थेसत्कलत्रसमन्वितः ॥ ४२॥ गुरुणासहितेदृष्टेदारनाथेबलान्विते ॥ कारकेवातथाभावेपत्नीव्रतपरायणा ॥ ४३॥ कल-
त्रेशेरवौवापिभृगौसौम्यनिरीक्षिते ॥ गुरुयुक्तेकलत्रेवाधर्मशीलापतिव्रता ॥ ४४॥ कलत्राधिपतौकेंद्रेशुभग्रहनिरीक्षिते

शुभांशेशुभराशौवापत्नीपतिव्रताभवेत् ॥४५॥ कलत्रेशेरवौवापिपापराश्यंशसंयुते ॥पापान्वितेपापदृष्टेपत्नीपापपरायणा ॥ ४६॥
भानौकलत्राधिपतौबलाढ्येशुभान्वितेशोभनराशिभागे ॥ शुभग्रहेणापिनिरीक्षितेवालग्नेशमित्रेपतिभक्तियुक्ता ॥ ४७॥ दारेश्वरे
वाकुसुदात्मबंधौपापान्वितेपापनिरीक्षितेवा ॥ पापांशकेपापगृहांतरस्थेकुमार्गचारीकठिनापराधा ॥४८॥ सौम्यांशकेसौम्यगृ-
हान्वितेवामित्रोच्चगेहेमृदुभागयुक्ते ॥ चंद्रेकलत्राधिपतौचशुक्रे पुण्यासुशीलासुचरित्रयुक्ता ॥ ४९॥ दाराधिपेहीनबलेधराजे
क्रूरादिषष्ट्यंशसमन्वितेवा ॥ निम्नारिमूढेविहगारिभावेदुष्टान्यसक्तापतिकर्कशावा ॥५०॥ मित्रोच्चवर्गेयदिदारनाथेशुभान्विते-
सौम्यदृशासमेते॥पारावतांशादिगतेबलाढ्ये क्रूरापिपत्युर्गुणमार्गयुक्ता ॥५१॥ दाराधिपेसोमसुतेसपापेनीचारिमूढेयदिनाश-
भावे ॥ पापांतरेपापदृशासमेतेजातापतिघ्नीकुलनाशकारी ॥५२॥ सुपुत्रसौख्यान्वितधर्मशीलाव्रतोपवासादिविशुद्धदेहा ॥
सौम्यकलत्राधिपतौबलाढ्येमित्रोच्चवर्गेयदिगोपुरांशे ॥५३॥ भृगोःसुतेदारपतौसपापेनीचान्वितेनीचभमूढगेहे ॥ क्रूरादिषष्ट्यं-
शसमन्वितेवावेश्यासमानाकठिनाहिचोरा ॥५४॥ शुक्रेकलत्राधिपतौबलाढ्येशुभान्वितेशोभनखेचरांशे ॥ मित्रोच्चवर्गेस्व-
गृहेमृदुस्थेवाचाटकीपुत्रवतीगुणाढ्या ॥५५॥ जारानिदुष्टाकुलदूषणास्यान्मंदेकलत्राधिपतौसपापे ॥ नीचांशकेनीचगृहेरिगेहे ३१
पापेक्षितेपापवियच्चरांशे ॥५६॥ परोपकारीद्विजदेवभक्तास्त्रीब्रह्मवादीगुरुदृष्टियुक्ते ॥ शुभेक्षितेधर्मरतासुशीलामंदेकलत्रा

धिपतौबलाढ्ये ॥ ५७॥ सराहुकेतूमदनेन्यसक्ता पापेक्षिते पापरता कुशीला ॥ क्रूरांशगे भर्तृविषप्रदा स्याल्लोकापवादान्वितकर्कशा
स्यात् ॥५८॥ दारेश्वरे सन्निहिते विलग्ननाथस्य बाल्ये परिणीतमाहुः ॥ लग्नात्कलत्राच्छुभखेचरेन्द्रे समीपराशौ यदि तत्तथैव ॥ ५९॥
लग्नकुटुंबे यदि दारभावे शुभान्विते शोभनवर्गयुक्ते ॥ तदीश्वरे शोभनदृष्टियुक्ते बाल्ये विवाहादिकमाहुरार्याः ॥ ६०॥ पारावतांशा
दिगनेकलत्रनाथे कुटुंबाधिपतौ बलाढ्ये ॥ मृद्वाख्यभागे तनुभावनाथे बाल्ये विवाहं मुनयो वदन्ति ॥ ६१॥ भाग्यं विवाहात्परतो व
दन्ति शुक्रे स्मरगे च पापखचरान्विते वा ॥ कुटुंबपे नाशभावयुक्ते लग्नेश्वरे वा शुभदृष्टियोगे ॥ ६२॥ तत्कारके दारपतौ कुटुंबनाथे विलग्ना
धिपतौ च दुःस्थे ॥ नीचारिमूढांशगते सपापे भाग्यं विवाहात्तु विनाशमेति ॥ ६३॥ क्रूरादिषष्ट्यंशसमन्वितेऽपि तत्कारके तादृश-
खचरेन्द्रे ॥ शुभान्विते शोभनदृष्टियाते नाशात्परं भाग्यमुपैति जातः ॥ ६४॥ क्रूरे कलत्रेशयुते त्रिकोणे तत्कारके पापसमन्विते वा ॥
कुटुंबराशौ यदि वात्रमाने दूरे विवाहान्कथयन्ति सन्तः ॥ ६५ ॥ मानेसपापे यदि वा कुटुंबे भाग्ये यथवा पापयुते कलत्रे ॥ क्रूरांशके क्रूरनि
रीक्षिते वा दूरे विवाहान्कथयन्ति सन्तः ॥ पुत्रादिलाभेष्वयमेव मार्गस्संचिंत्य धीमान्वदेत्सुतादीन् ॥ लग्नेश्वराद्धीनबले कलत्रनाथेऽरि-
भागांशयुते विमूढे ॥ ६७॥ नीचांशके नीचसमन्विते वा निकृष्टजातो हि कलत्रलाभः ॥ लग्नेश्वरात्पूर्णबले कलत्रनाथे शुभांशे शुभदृ
ष्टियुक्ते ॥ ६८॥ वैशेषिकांशे परमोच्चभागे उत्कृष्टजातो हि कलत्रलाभः ॥ लग्नेश्वरे हीनबले कलत्रनाथात्सपापे यदि नीचभागे ६९

नाशास्थितेवान्यपरोहभागेकलत्रजातेःस्वयमत्रहीनः ॥ तस्माद्बलाढ्येतुविलग्ननाथेतत्रारोहभागेपरमोच्चभांशे ॥७०॥ केंद्रत्रिकोणेयदि अ· ६
स·चिं· ३५ वासमौम्येश्चः कलत्रवान्स्वयमेवजातः ॥ कलत्रनाथाद्यदिवाकलत्रराशेः कुटुंबाधिपतेर्वदेद्वा ॥७१॥ बलेनसाम्येसमजातिमाहुःस्त्रि
यंस्वर्गात्तांपतिर्भक्तिचित्ताम् ॥ लग्नेश्वरस्यापिकलत्रनाथेशत्रौनदीयस्त्विहशत्रुभूतः ॥७२॥ मित्राणितेतस्यकुलोद्भवाश्चमित्रे
विलग्नाधिपतेस्तदार्नाम् ॥ दारेश्वरस्यापिविलग्ननाथेशत्रौनदीयास्त्वरयस्ततोन्ये ॥ ७३॥ कलत्राधिपतेर्वर्णराशौवाकारकस्यच
सर्वोत्तमबलस्यैवतत्पामध्येविनिर्दिशेत् ॥७४॥ सुगुणारूपसंपन्नातस्मिन्गुर्वक्षवीक्षिते ॥ पापेक्षितेपापयुक्तेकुरूपादुर्गुणा
भवेत् ॥ ७५॥ कलत्रनाथस्थितभंतदीयंराशिंकलत्रस्यविदुर्महांतः ॥ तस्योच्चनीचंयदिवाकलत्रराशिंतदंशात्रितयंतदीयम् ७६
कलत्रराशित्रितयेथवास्यात्तदीशसंयुक्तभकोणराशौ ॥ कलत्रराशिंसमुदाहरंतिप्रोक्तान्यराशौयदिनास्तिपुत्रः ॥७७॥ गोसिं
हकन्यालिपुजन्मराशिःस्त्रीणांभवेज्जन्मनिवाल्पपुत्रा ॥ शुभग्रहेराशिमितेपुनस्तुस्तनान्वदेत्तत्रबहून्गुणाढ्यान् ॥७८॥ वं
ध्यासंगोमंदभानौचंद्रेदासीसमास्त्रियः ॥ कुजेरजस्वलासंगोवंध्यासंगश्चकीर्तितः ॥७९॥ बुधेवश्यार्थहीनावावणिक्स्त्रीवा-
प्रकीर्तिता ॥ गुरौब्राह्मणभार्यास्याद्गर्भिणीसंगमोभृगौ ॥८०॥ हीनावापुष्पितावास्यात्तुमंदराहुफणीश्वरैः ॥ राहोश्चगर्भिणी ३२
संगःकृष्णयाकुक्षयाशनौ ॥८१॥ एवंस्वर्वस्थितेरेतनीदृक्स्त्रीसंगमूह्यताम् ॥ सूर्याद्यैःस्वर्वगैर्वाच्योवाहनगृहनिर्णयः ८२

वनं गृहं च कुड्यं स्यादिह हारो देवतालयम् ॥ जलहारिगजस्थानं भित्तिस्थानं निरूप्यताम् ॥ ८३ ॥ पापैर्युक्ते च तनुः केंद्रे च तनुस्थाने मैथुनं
वदेत् ॥ पापैर्दृष्टेषु सर्वेषु केंद्रे षर्वांवनिर्दिशेत् ॥ ८४ ॥ केंद्रे कोणे पापयुते पशुवन्मैथुनं वदेत् ॥ मंदे पापान्विते वापि समादोनादृश्य
वदेत् ॥ ८५ ॥ मंदे सूर्ये सुरवे भौमे पशुवन्मैथुनं वदेत् ॥ राहौ कलत्रे भौमेन स्मरवेतादृशं मैथुनम् ॥ ८६ ॥ मंदेशे भृगुसंदृष्टे भौमस्थे
नगतथवा ॥ भृगुणा सहिते वापि भगचुंबनभाग्भवेत् ॥ ८७ ॥ एवं कुटुंबनाथेन भगचुंबनभाक् भवेत् ॥ कर्मेशे मंदसंदृष्टे भौम-
क्षेत्रगे तथवा ॥ भृगुणा सहिते वापि भगचुंबनभाग्भवेत् ॥ ८८ ॥ लग्नेशे नीचराशयादौ स्थिते नादृशा चुंबनम् ॥ एवं कुटुंबनाथेन भग
चुंबनभाग्भवेत् ॥ ८९ ॥ कुजे क्रूरशस्तनी मंदे राह्वादौ लंबनस्तनी ॥ कठिणोर्ध्वकुचाभानो शेषैः स्थूलोन्नमस्तनी ॥ ९० ॥ पापेन-
केन सहिते वैलक्षण्यकुचा भवेत् ॥ दारेशे पापखेटे वा शुभे वा नादृशास्तनी ॥ ९१ ॥ शुभद्वयेन सहिते दारेशेपि तथाविध ॥ समस्त-
नी भवेत् पत्नी पापयोगेन्यथा भवेत् ॥ ९२ ॥ अतिस्थूलस्तनी पत्नी सशुभे दारनायके ॥ जलग्रहे जलक्षेस्थे गुरुणापि निरीक्षिते ९३
रवौ वा भूमिपुत्रे वा मंदमांद्यगुरुसंयुते ॥ दाराधिपे पापभागे भगं दग्धं विनिर्दिशेत् ॥ ९४ ॥ नदीशे गुरुशुक्रौ वा शुभांशसहिता यदा
समं भगं भवेत्तस्याः पापयुक्ते तु दुष्टं कम् ॥ ९५ ॥ शनिचंद्रविदां मध्ये यत्रैकस्मिन्मदेश्वरे ॥ ह्रस्वं भगं समादिष्टं स्त्रियामेवं विनिर्दि
शेत् ॥ ९६ ॥ कलत्रेशे जलक्षस्थे कारके वा तथाविध ॥ जलक्षे दारभावे वा पूर्णचंद्रनिरीक्षिते ॥ ९७ ॥ चंद्रे जलक्षे दारस्थे जलस्थ-

भृगुवीक्षिते ॥ जलर्क्षस्थविदा दृष्टे स्त्रीगुह्यस्यार्द्रता भवेत् ॥ ९८॥ पूर्णे शशांके दारस्थे जलराश्यंशकेऽपि वा ॥ जलस्थगुरुसंदृष्टे सततं त्वार्द्रता भवेत् ॥ ९९॥ परमोच्चांशके शुक्रे जलराशिगतेऽपि वा ॥ भानुना संयुते वापि मैथुनाद्वनिताद्दृशम् ॥ १००॥ दारेशो शुक्रकरा शिस्थे दारे वा शुष्कसंज्ञके ॥ शुष्कग्रहेण संयुक्ते लग्नाद्र्गुह्यमादिशेत् ॥ १॥ पापक्षेत्रे पापमध्ये दारेशे भिन्नथा विधे ॥ पापदृग्योग संजाते लग्नार्द्रगुह्यमादिशेत् ॥ २॥ सप्तमेशे गुरोर्दृष्टे शोभनांशसमन्विते ॥ सौम्यांशे सौम्यसंदृष्टे स्तूपदध्याज्यभाग्भवेत् ३ सप्तमस्थबुधे दृष्टे गुरुणा बलसंयुते ॥ कर्क्यंशेनापि संदृष्टे स्तूपदध्याज्यभाग्भवेत् ॥ ४॥ दारस्थे भृगुपुत्रे वा पूर्णचंद्रनिरीक्षिते ॥ पापैरयुक्ते दृष्टे वा स्तूपदध्याज्यभाग्भवेत् ॥ ५॥ रवौ वा भूमिपुत्रे वा सप्तमे शशभोक्षिते ॥ कर्क्यंशस्थानगते वापि कदाचिद्दधिस्तूप-भाक् ॥ ६॥ पापे सप्तमभावस्थे तदीशे पापसंयुते ॥ क्रूरषष्ठ्यंशके वापि घृतस्तूपादिहीनभाक् ॥ ७॥ चंद्रे गुरौ वा दारेशे जलराश्यंशसंभवे ॥ जलग्रहेण वा दृष्टे क्षीरपानादिभाग्भवेत् ॥ ८॥ सप्तमेशस्थितांशेशे शुभदृष्टिसमन्विते ॥ शुभग्रहांशके वापि गुडक्षी-रादिपानभाक् ॥ ९॥ बहवः सप्तमे पापाः षष्ठे वा रंध्रेऽपि वा ॥ क्रूरषष्ठ्यंशसंयुक्ता मूत्रकृच्छ्रविधिं निर्दिशेत् ॥ १०॥ इति सप्तमभावस्था निश्चितोऽर्थविचित्रयुक् ॥ षष्ठाध्यायो मया प्रोक्तो व्यंकटेशेन धीमता ॥ ११॥ ॥ इति सर्वार्थचिंतामणौ षष्ठोऽध्यायः ॥ ॥

॥ ॥ अथाष्टमभावविचारः ॥ ॥ मरणाज्जीवनमरणं गुह्यस्थानं च मरणहेतुं च ॥ अन्नस्करवमृतिदंशं परिभवमपि चिंत-

येनुमाज्ञः ॥ १॥ रंध्रेश्वरेपापयुते व्ययराशावल्पायुरस्येतिवदंतिषष्ठे॥ तत्रापिलग्नेश्वरयोगजातोस्वल्पायुरस्येतिवदंतिसंतः ॥२॥ स्वक्षे
त्रसंस्थेयदिरंध्रनाथेदीर्घायुराहुर्मुनयोमहांतः ॥ मंदेनवाचिंत्यविशेषमायुः स्वक्षेत्रमित्रोच्चगृहस्थितेन ॥३॥ रंध्रेश्वरेणापियुते
विलग्ननाथेरिपोवाव्ययराशियुक्ते ॥ षष्ठांत्यपेवायदिलग्नयुक्तेदीर्घायुरस्येतिशुभेक्षितश्चेत् ॥४॥ कर्मेश्वरेणापिविचिंत्यमा
युर्दीर्घस्फुटंस्वोच्चयुतेनतेन ॥ केंद्रस्थितैःकर्मविलग्नरंध्रनाथैस्तथैवायुरुदाहरंति ॥ प्रोक्तंग्रहेर्व्योमचरैस्त्रिभिर्वासमायु
जैःकेंद्रगतैस्तथैव ५ केंद्रान्वितेविलग्नेशेगुरुशुक्रसमन्विते ॥ ताभ्यांनिरीक्षितेवापिदीर्घमायुर्विनिर्दिशेत् ॥६॥ स्वक्षे
त्रकोणादिगतैर्विशेषाद्वदंतिदीर्घायुरुदारचित्ताः ॥७॥ चतुरस्रेशुभैर्युक्तेलग्नेशेशुभसंयुते ॥ गुरुणादृष्टिसंयोगेपूर्णमायु
र्विनिर्दिशेत् ॥८॥ त्रिषडायगताःपापाःशुभाःकेंद्रत्रिकोणगाः ॥ लग्नेशबलसंयुक्तेपूर्णमायुर्विनिर्दिशेत् ॥९॥ षट्सप्तरंध्रभा
वेषुशुभेषुसहितेष्वथ ॥ त्रिषडायेषुपापेषुपूर्णमा० ॥१०॥ रंध्राधिपेविलग्नस्थेगुरुशुक्रयुतेक्षिते ॥ लग्नेशेकेंद्रभावेवादीर्घमा
युर्विनिर्दिशेत् ॥११॥ उच्चाश्रितैस्त्रिभिःखेटैर्लग्नेरंध्रेशसंयुते ॥ रंध्रेपापविहीनेतुदीर्घमायुर्विनिर्दिशेत् ॥१२॥ रंध्रस्थिते-
स्त्रिभिःखेटैःस्वोच्चमित्रस्वगेहगैः ॥ लग्नेशबलसंयुक्तेदीर्घमायुर्विनिर्दिशेत् ॥१३॥ पारावतादिभागस्थाःपापाःसर्वेशुभा
स्तथा ॥ केंद्रत्रिकोणनिलयाःपूर्णमायुर्विनिर्दिशेत् ॥१४॥ षष्ठाष्टमेव्ययेपापेलग्नेशेदुर्बलेयदि ॥ अल्पायुरनपत्योवाशुभट

ग्योगवर्जिते ॥१५॥ क्रूरषष्ठ्यंशकेवापरंध्रेशेभानुजेऽपिवा ॥ पापान्वितेपापदृष्टेत्वल्पमायुर्विनिर्दिशेत् ॥१६॥ चतुष्टयगतेपापेशुभ
भदृष्टिविवर्जिते ॥ बलहीनेविलग्नेशेत्वल्पमायुर्विनिर्दिशेत् ॥१७॥ व्ययार्थौपापसंयुक्तौशुभदृष्टिविवर्जितौ ॥ क्रूरषष्ठ्यंशकेवा
पिस्वल्पमायुर्विनिर्दिशेत् ॥१८॥ आयुर्योगास्त्रिधाप्रोक्तास्वल्पमध्यचिरायुषः ॥ द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततोभवेत् १९
समत्याःप्राक् ततःपूर्णमायुरत्रवदंतिहि ॥ अल्पायुर्दिननाथस्य शत्रुर्लग्नाधिपोयदि ॥२०॥ समत्वेमध्यमायुःस्यान्मित्रेदीर्घायु
रादिशेत् ॥ बलहीनेविलग्नेशेजीवेकेंद्रत्रिकोणगे ॥२१॥ षष्ठाष्टमव्ययेपापेमध्यमायुरुदाहृतम् ॥ शुभेकेंद्रत्रिकोणस्थेशनौ
बलसमन्विते ॥२२॥ षष्ठेवाप्यष्टमेपापेमध्यमायुरुदाहृतम् ॥ लग्नेत्रिकोणेकेंद्रेवामध्यमायुश्चमिश्रिते ॥२३॥ अल्पायुर्यो
गजातानांविपत्पाकेमृतिप्रदः ॥ मध्यमेप्रत्यरिदशामृतिंदद्याद्विशेषतः ॥२४॥ वधभेशादशाकष्टापूर्णायुर्योगसंज्ञके ॥ योगा
युरितिनिश्चित्यजातस्यैवंवदेद्बुधः ॥२५॥ आयुर्विलग्नाधिपतीबलेनहीनौधरासूनुव्रणेशयुक्तौ ॥ युद्धेमृतिंतस्यवदंतितज्ज्ञाः
शस्त्रव्रणवान्मरणंविशेषात् ॥२६॥ रंध्रांगनाथौयदिवारिपुस्थौराह्वन्वितौकेतुयुतौसमंदौ ॥ तद्भुक्तिकालेप्यथवाविपाकेशस्त्र
पातैरेमरणंप्रयाति ॥२७॥ रंध्रांगपौवाहननाथयुक्तौतस्मान्मृतिंतस्यवदंतितज्ज्ञाः ॥ मृतिंत्वजीर्णाद्गुरुसंयुतौतौदेहेशजीवौ
रिपुगावजीर्णात् ॥२८॥ लग्नेश्वरेवाहननाथयुक्तेवागीश्वरेणापियुतौत्वजीर्णात् ॥ देहेश्वरेवाहनवित्तभावनाथान्वितेवामरणं

त्वजीर्णात् ॥ २९॥ रंध्रेशयोगान्मरणंदशायामंतर्दशायामथवावदंति ॥ पित्रादिभावाधिपयोगदृष्ट्यापित्रादिकानांमरणंतथैव ३०
भुक्त्यंगपो भानुसुतेनयुक्तोदुःस्थानगोवाविषभक्षणेन ॥ राहुध्वजाभ्यांसहितोच्चदुस्थोऽदृष्टधनात्तस्यमृतिंवदंति ॥ ३१॥ ष
ष्ठेश्वरेभानुसुतेसराहौकेनोमृगाङ्कीनिमुदाहरंति ॥ जीवेनयुक्तेगजभीतिमस्यजातस्यचंद्रेणयुतेऽश्वभीतिम् ॥ ३२॥ सूर्या-
न्वितेतादृशभानुपुत्रेमृगात्सस्थगाच्छुनकात्सभौमे ॥ षष्ठस्थितेभानुसुतेपिचैवंविनास्वतुंगस्वगृहंसखेटे ॥ ३३॥ सुखेशा
भाग्येशविलग्ननाथास्त्रिकोणगाःकेंद्रगताश्चसर्वे ॥ भुक्तौयदानत्सरिपाककालेपित्रासहेवानुमृतिंचमातुः ॥ ३४॥ रंध्रेश-
शांकेफणिनाथयुक्तेहीनेत्वपस्मारयुतःसमंदे ॥ नत्रस्थितेहीनबलेशशांकेपिशाचपीडाजलजाचपीडा ॥ ३५॥ भौमाहिमं
दान्यतमेनयुक्तेक्षीणेशशांकेनिधनस्थितेपि ॥ दुःस्थेत्वपस्मारभयान्मृतिःस्यात्पिशाचबाधात्वथवामृतिःस्यात् ॥ ३६॥ रंध्रे
सराहौयदिवासकेनोचातुर्थिकात्पीडनमाहुरस्य ॥ रंध्रेश्वरेणापियुतेतथैवंक्रूरादिषष्ठ्यंशयुतेतिसत्यम् ॥ ३७॥ नीचस्थिते
वासरनायकेवाषष्ठाष्टमस्थेयदिपापदृष्टे ॥ राज्ञांभकोपान्मरणंपितुश्चतत्पीडयावित्तविनाशमेति ॥ ३८॥ ॥ किंचिद्दरि
ष्टयोगः ॥ ॥ लग्नाच्छुभेकर्मणिभूमिपुत्रेपापेक्षितेमातुलमृत्युमाहुः ॥ मंदेनयुक्तेयदिपुत्रमृत्युंचंद्रेहितन्मातृमृतिंसपापे ॥
॥ ३९॥ पितुर्मृतिर्वासरनायकेत्रनसंशयःपापदशासमेते ॥ पापद्वयेनापियुतोविलग्नेनिशाकरोमृत्युमुपैतिबालः ॥ ४०॥ ग्रस्ते-

शशांकेपरिवेषयुक्तेपापेक्षितेवामरणंचसद्यः ॥ त्वष्टार्यतोयेशुभिलग्नचंद्रेजातःसवित्रीसुतमातुलांश्च ॥४१॥ पादक्रमेणापिनिहं
तितास्तुशुभैस्तुदृष्टेसहितेनदोषः ॥ लाभेशुभैर्वायदिमंदभौमौफणींद्रयुक्तोपितुरस्त्यपायः ॥४२॥ पापेक्षितेभूमिसुतेकल
त्रेजातःसमृत्युंसमुपैतिरंध्रे ॥ सौम्येधरासूनुयुतेसपापेपापेक्षितेसोदरनाशमाहुः ॥४३॥ अस्तेशशांकेयदिमातृमृत्युंपा-
पान्वितेपापदृशासमेते ॥ भानोःपितुर्मृत्युमुदाहरंतिमंदारशुक्रैःसहितेसुतस्य ॥४४॥ तृतीयषष्ठस्थितखेचरेंद्रैःपापग्र-
हैरंत्यगतैश्चसौम्यैः ॥ शिशोर्मृतिंवाकुसुदात्मबंधोश्चतुर्थरंध्रस्थितपापखेटैः ॥४५॥ लग्नेर्कचंद्रौव्ययगास्तुपापाःशिशोर्मृतिं-
शोभनदृष्ट्यभावे ॥ अस्तेरवौचंद्रयुतेविलग्नेपापान्वितेनत्सुतमृत्युमाहुः ॥४६॥ दिनेशचंद्रौव्ययगौतदानीमंधोभवेत्सौम्यदृशावि
हीनौ ॥ युक्तेनयोरन्यतरेणरिःफेकाणोभवेत्सौम्यदृशाविहीने ॥४७॥ दिनेशचंद्रौव्ययगौतदाशोलग्नस्थितेदेहविनाशमाहुः ॥ सुरे
श्वरेरंध्रगतेव्ययेवापापान्वितेपापदृशासमेते ॥४८॥ लग्नाधिपेपूर्णबलेसुखेशाभाग्येश्वरोनाशगतोविहीनो ॥ जातस्यजन्माव
सरेतदानींपितुश्चमातुर्निधनंवदंति ॥४९॥ दुःस्थेतृतीयाधिपतौसचंद्रेस्तन्यंपरस्त्रीषुपिबेत्सबालः ॥ तातेशतत्कारकखेचरें
द्रौदुःस्थौतयोःपुत्रसुखंनदृष्टम् ॥५०॥ केंद्रत्रिकोणेयदितौविहंगौवदेत्तयोःपुत्रसुखंनदृष्टम् ॥ पितुर्निशायांमरणंवदंतिभा
ग्येशसूर्यार्कसुताःक्षतस्थाः ॥५१॥ षष्ठेश्वरेणापियुतास्तथैवचंद्रेणहीनास्तुदिवामृतिःस्यात् ॥ सुखस्थितेःखेचरनायके-

वांमातुर्मृतिस्स्यादयनेतुनस्मिन् ॥ ५२॥ नोचेत्तदीशान्वितराशिकालेमातुर्मृतिःस्यादयनेतुनस्मिन् ॥ द्विस्व्यादियोगादयनेहिन
त्रयव्यत्यासतोवाभवदंतिसंतः ॥ ५२॥ नाशेचरेवापितृभावनाथेदूरस्थितस्तज्जनकोपिवाच्यः ॥ स्थिरोभयस्थेपितृभावनाथे
समीपतस्तज्जनकस्थितःस्यात् ॥५४॥ केंद्रेचरेर्केयदिवाशशांकेस्फुतोदहेतनपितरोननत्र ॥ द्विदेहराशौयदिनोचकेंद्रेनयोर्मृतिं
वादहनादिकालः ॥ ५५॥ बलेनयुक्तेपितृभावनाथेशशांकदेहश्चतुर्थनाथः ॥ बलेनहीनायदितज्जनन्यायोगादथाविपत्तिसमुदाह
रंति ॥५६॥ रंध्रेतुपापबाहुल्येगुल्मरोगंविनिर्दिशेत् ॥ शुभग्रहेणसंदृष्टेनदोषस्तत्रनिर्दिशेत् ॥ ५७॥ रंध्रेशःशुभक्षितेनेतेनसंयुते
त्रेस्फुरत्वंभवेत् ॥ स्थूलान्नपापसंबंधेमृद्वन्नशुभसंयुते ॥ ५८॥ रंध्रेशेपापसंयुक्तेपापदृष्टेतदंतरे ॥ पापक्षेत्रेथवारंध्रेजातः
परिभवान्वितः ॥५९॥ शुभग्रहाणांसंबंधेरंध्रेपरिभवोनहि ॥ चरेरंध्रेमृतिर्दूरेनदीशेचरराशिगे ॥ शनौवान्तरराशिस्थेचराशस्य
नथाभवत् ॥ स्थिरेरंध्रेनदीशेपिस्थिरराशौनदंशके ॥ ६१॥ शनौवास्थिरराश्यंशेस्वगृहेमरणंभवेत् ॥ रंध्रेद्विदेहराश्यादौमा
र्गमरणमादिशेत् ॥ ६२ ॥ ॥ इत्यष्टमभावः ॥ ॥ अथनवमभावविचारः ॥ ॥ शुभभवनाद्गुरुभाग्यपितृपौत्राद्-
यानपःमार्गभम् ॥ ऊरुस्थानंस्वांतंसहभोक्तृनृदानयोगमपिविंद्यात् ॥ १॥ चिंतनीयागुरुस्वामीपितृभाग्यादिमातुलाः ॥ नवमे
स्वामिसौम्यादेयशुभाएतेन्यथाशुभाः ॥ २॥ चंद्रेसपापेयदिधर्मराशौभृगोःसुतेवागुरुदारगामी ॥ धर्माधिपेनादशरेखेचरे-

णयुतेसपापेगुरुदारगामी ॥३॥ धर्माधिपस्थांशपतेोनथैवयुक्तेनदानादशदारगामी ॥ वयोधिकस्त्रीगमनंवदंतिचंद्रेसपापेयदि
धर्मराशो ॥४॥ क्षीणानिशीशेत्वथवातदंशेशुक्रेनथैवंगुरुदारगामी ॥ धर्माधिपेनीचगतेनदंशेशुक्रेणयुक्तेगुरुदारगामी ॥५॥
धर्मेश्वरेसौम्ययुतेनदंशेवैशेषिकांशेत्वथवानदीशे ॥ क्रूरादिषष्ट्यंशविवर्जितेस्याज्ज्ञानस्तुधर्मेदृढबुद्धियुक्तः ॥६॥ गरोवाभृगुयु
त्रेवास्वोच्चमित्रांशकेशुभे ॥ धर्माधिपेबलयुतेः धर्माध्यक्षोनरोभवेत् ॥७॥ गुरुशुक्रबुधांशस्थेधर्मनाथेशुभेक्षिते ॥ शुभग्रहा
णांमध्यस्थेधर्मभाक्सनरोभवेत् ॥८॥ सौम्यान्वितेधर्मगृहेतस्मिन्पापांशसंयुते ॥ क्रूरषष्ट्यंशकेवापिदंभाद्धर्मपरिग्रहः ॥९॥
नाथकारकभावानामंशेशुभसमन्विते ॥ शुभांशेशुभसंदृष्टेस्फचित्तोधर्मसंयुतः ॥१०॥ धर्मेपापेपापभाक्स्यात्नदांशेपाप
संयुते ॥ क्रूरषष्ट्यंशकेवापिपापमध्यगतेथवा ॥११॥ राहुमंदयुतेधर्मेक्रूरांशेगुळिकेक्षिते ॥ नदीशेक्रूरराश्यंशेत्वनिक्रूरादि-
कृद्भवेत् ॥१२॥ पितृस्थानेश्वरेसौम्येकारकेशुभसंयुते ॥ भावेवाशुभसंयुक्तेपितृसौख्यंविनिर्दिशेत् ॥१३॥ पारावतादिभा
गस्थेनाथेवाकारकेपिवा ॥ स्वोच्चमित्रांशकेवापिपितृसौख्यंविनिर्दिशेत् ॥१४॥ सौम्यांतरस्थेतन्नाथेगुरुशुक्रयुतेक्षिते ॥
तेषामेकेनसंयुक्तेपितृसौ० ॥१५॥ गोपुराद्यंशसंयुक्तेकारकेनाथवीक्षिते ॥ पापैरवीक्षितेयुक्तेपितृसौख्यंविनिर्दिशेत् १६
पापदृष्टेसपापेवाकारकेभावनायके ॥ पापांतरगतेवापिपितृदुःखंविनिर्दिशेत् ॥१७॥ क्रूरनीचांशकस्थेवाभावनाथेचकारके

मंदमांद्यगुसंयुक्ते पितृदुःखं विनिर्दिशेत् ॥१८॥ सौम्येनदीश्वरे वापि नीचशत्रुसमन्विते ॥ क्रूरषष्ट्यंशके वापि पितृदुःखं विनिर्दि-
शेत् ॥ १९॥ पितृस्थानेश्वरांशेशसंयुक्तनवभागपः ॥ क्रूरनीचारिभागस्थः पितृदुःखं विनिर्दिशेत् ॥२०॥ लग्नेशात्पितृभावेशे सं-
पूर्णबलसंयुते ॥ कारके वा शुभे दृष्टे जातः पितृवशानुगः ॥ २१॥ पितुर्जन्माष्टमे जातस्तदीशे लग्नगेऽपि वा ॥ तेनैव पितृकार्याणि
कर्मशेषं समापयेत् ॥२२॥ पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः ॥ पितृजन्मनदीपक्षे जातः पितृधनाश्रितः ॥२३॥ पितुः
षष्ठाष्टमे जातः पित्रोः शत्रुर्भवेन्नरः ॥ पितुर्धर्मायवित्तेषु जातः पितृवशो भवेत् ॥ २४॥ पित्रष्टमेशनिस्तेत्र तृतीये यस्तु जायते ॥
सकरोति पितुर्दीक्षां पुत्रपौत्रसमन्वितः ॥२५॥ पितुर्जन्मात्यभे शक्षात्रितये यस्तु जायते ॥ सकरोति पितुर्दुःखं दूरदेशगतो भवे-
त् ॥२६॥ भाग्याधिपविलग्नेशौ दुश्चिक्ये धर्मगेऽपि वा ॥ बलवान्स्वोच्चभे वापि येयातेश्च प्रमानवाः ॥२७॥ त्रिकोणकेंद्रे यदि भा-
ग्यनाथे सौम्येक्षिते सौम्ययुते बलाढ्ये ॥ पारावतांशादिगते शुभांशे जातो धनाढ्यो बहुभाग्ययुक्तः ॥२८॥ धनाधिपे लाभगते न-
दीशे भाग्यस्थिते तद्भवनाधिपे च ॥ कर्माधिपेनापि युते च दृष्टे जातो महाभाग्ययुतो नरः स्यात् ॥२९॥ तृतीयराशेरधिपेन युक्ते भा-
ग्याधिपे सौम्यदृशा समेते ॥ शुभान्वितेशे भवने खचराशेर्भ्रातुर्धनाद्भाग्यमुपैति जातः ॥३०॥ पुत्रेश्वरे वा यदि भाग्यराशौ भा-
ग्याधिपेनापि युतेऽपि दृष्टे ॥ तत्कारके वा यदि पुत्रभावे जातः सुतनाद्भाग्यमुपैति वित्तम् ॥३१॥ ज्ञातिस्थानाधिपे भाग्ये भाग्येशे-

स·चिं· ज्ञातिसंगते ॥ ज्ञातिकारकसंयुक्ते ज्ञातिभाग्यमुपैतिसः ॥ ३२॥ कलत्रकारकादेवं तत्स्थानेशाद्विदेत्तथा ॥ भाग्याधिपस्यशत्रुस्थे अ·
३७ च्छत्रुराशिपनिस्तथा ॥ ३३॥ नदीशे भाग्यसंबंधे शत्रु भाग्यमुपैतिसः ॥ षष्ठाष्टमान्त्यनाथेन युक्ते नाथेऽनन्तफलम् ॥ ३४ ॥ भा ७
ग्याधिपे विनाशस्थे शत्रुनीचनिरीक्षिते ॥ क्रूरांशेनीचराश्यादौ भाग्यहीनो भवेन्नरः ॥ ३५॥ बहुपापसमायोगे भाग्यहीने नदीश्व
रे ॥ लग्नेशे बलहीने वा भाग्यहीनो भवेन्नरः ॥ ३६॥ गुरुशुक्रेक्षिते युक्ते भाग्ये तन्नायकेपिवा ॥ लग्नेशार्यपतौ धीरे भाग्यप्रा-
प्तिः पुनर्भवेत् ॥ ३७॥ क्रूरराश्यंशके भाग्यनाथे शुक्रेज्यवीक्षिते ॥ भाग्यलग्नेशसंदृष्टे भाग्यनाशं करोतिसः ॥ ३८॥ लग्नेशे भा
ग्यराशिस्थे भाग्येशे लग्नमाश्रिते ॥ लाभे भाग्येशसंयुक्ते पुनर्भाग्यं भवेत्खलु ॥ लाभभाग्येशसंयुक्ते भाग्यपेर्थे पुनर्भवेत् ३९
कर्मेशे भाग्यराशिस्थे भाग्येशे बलसंयुते ॥ गुरुशुक्रयुते दृष्टे जपध्यानसमाधिमान् ॥ ४०॥ कर्मेशे शुक्रराश्यंशे राशीशे बलसं-
युते ॥ नदीशे भाग्यसंबंधे जपध्यानसमाधिमान् ॥ ४१॥ देवलोकांशकस्थे वा कर्मेशे भाग्यपेथवा ॥ पारावतांशके सौम्यदृष्टे ब्र
ह्माणिनिष्ठभाक् ॥ ४२॥ दानस्थानाधिपेस्वोच्चे शुभग्रहनिरीक्षिते ॥ तत्स्थाने शुभसंयुक्ते दानकृत्सनरो भवेत् ॥ ४३॥ पारा-
वतादिभागस्थे दानेशे गुरुवीक्षिते ॥ लग्नेशे भृगुसंदृष्टे महादानकरो भवेत् ॥ ४४॥ दानाधिपेन संदृष्टे लग्ने तन्नायकेपिवा ॥ ३७
तस्मिन्केंद्रत्रिकोणस्थे महादानकरो भवेत् ॥ ४५॥ सिंहासनांशके दाननाथे लग्नेशवीक्षिते ॥ कर्मेशेनापि संदृष्टे महादा० ॥ ४६॥

भाग्ययोगेतुसंप्राप्ते दानयोगेनशुभभवेत् ॥ राजयोगेथवाप्राप्ते नेतरेषांतथाभवेत् ॥४७॥ इतरेषांतुसंप्राप्ते दानयोगेकथंभवेत्
भाग्ययोगेनरोजातोदानस्यतुसहायकृत् ॥४८॥ जातःपुरोहितेनोवाथब्रह्मवंशसमुद्भवः ॥ दानाध्यक्षोथजातःस्यात्वर्णभेद
विकल्पनात् ॥४९॥ चतुर्थेदानभावेशेकर्मेशेकेंद्रमाश्रिते ॥ व्ययेशगुरुसंदृष्टे महादानकरोभवेत् ॥५०॥ भाग्येशेनापि
संदृष्टेस्वोच्चस्थेसोमनंदने ॥ लाभेशेकेंद्रभावस्थेमहादानकरोभवेत् ॥५१॥ लग्नेशेलाभराशिस्थेकर्मेशेबलसंयुते ॥ दाना
धिपेनसंदृष्टेदानग्रहणमिष्यते ॥५२॥ स्थानेशेभाग्यराशिस्थेकर्मभाग्यपसंयुते ॥ लग्नेशेनापिसंदृष्टेदानप्राप्तिर्नसंशयः ॥५३॥
भाग्येशेकर्मनाथेनदृष्टेकेंद्रत्रिकोणगे ॥ परमोच्चांशकेवापिदानप्राप्तिर्नसंशयः ॥५४॥ गुरुस्थानेशसंयुक्तनवांशाधिपतेोय-
दा ॥ गुरुशुक्रेक्षितेवापिगुरुभक्तियुतोभवेत् ॥५५॥ गुरुस्थानेसौम्ययुतेगुरुसंबंधसंयुते ॥ नदीशमृदुभावस्थेगुरु० ५६
अध्यायःसप्तमःप्रोक्तआयुर्धर्माधिवाचकः ॥ नानार्थसारसंयुक्तोव्यंकटेश्वरशर्मणा ॥५७॥ ॥ इतिसप्तमोऽध्यायः ॥
॥ ॥ अथदशमभावविचारः ॥ ॥ दशमात्प्रवदन्तिमाज्ञाकीर्तिवृष्टिप्रवासपूर्तादीन् ॥ मानंकर्माजीवंजानुस्थानंचनि-
र्दिशेद्धासान् ॥१॥ कर्माधिपेहीनबलेसपापेकर्मादिवैकल्यमुशंतितज्ज्ञाः ॥ कर्मेशवागीशशशांकपुत्राबीर्यान्वितायज्ञकरा
भवंति ॥२॥ शुभग्रहैर्दृष्टिसमन्विताश्चेवीर्यान्वितायज्ञविशेषमाहुः ॥ दुःस्थाःशशांकात्मजजीवशुक्राःपापेक्षिताःकर्म-

विनाशमाहुः ॥ नाशस्थितास्तत्रनदंशनाथास्तद्युक्तराशेरधिपाश्चनाशम् ॥ राहोच्चमानेयदिवादिनेशो भार्गीरथीस्नानमुशंति
नज्ज्ञाः ॥ ४ ॥ मानेचमीनेयदिवासरोम्यो भौमान्वितेवाभविताच्चमुक्तिः ॥ जलर्क्षगेपूर्णशशांकजीवे मानस्थितेनागजलादि
पूतः ॥ ५ ॥ मानेगुरौशुक्रयुतेचकेंद्रे स्वोच्चस्थितेनादशतोयपूतः ॥ मानेधनेशुक्रयुतेसजीवे केंद्रोच्चगेनादशतोयपूतः ॥ ६
बुधेव्ययेवायदिवानदीशेस्वोच्चान्वितेनादशपुण्यभाक्स्यात् ॥ चंद्रेतृतीयेजलराशियुक्तेसौम्यान्वितेनादशपुण्यभाक्स्या
त् ॥ ७ ॥ शुभेम्बरेकेंद्रयुतेजलर्क्षेसौम्येक्षितेनादशतोयपूतः ॥ बुधेसजीवेयदिवासभौमे प्राकारकन्मंडपगोपुरादीन् ८
मानस्थितेनहृहनाथयुक्ते करोतिजीर्णोद्धरणादितत्र ॥ ९ ॥ करोतिकूपादितटागभूमिकर्मेश्वरेगोपुरभागयुक्ते ॥ मृदंग-
शकेवाशुभदृष्टियुक्तेभाग्येश्वरेणापिनिरीक्षितेवा ॥ १० ॥ चंद्रात्मजेकर्मगतेनदीशे भाग्यस्थितेपापविवर्जितेस्मिन् ॥ सौ
म्येक्षितेशोभनभावयुक्ते यज्ञस्यकर्तासभवेत्तदानीम् ॥ ११ ॥ कर्माधिपेस्मिन्यदिसोमपुत्रे स्वोच्चस्थितेवायदिधर्मराशौ ॥
विवर्जितःस्याच्छिखिराहुपापैर्यज्ञस्यकर्तासभवेत्तदानीम् ॥ १२ ॥ कर्माधिपेस्वोच्चगतेसपापेनीचांशगेनाशगतेपितस्मिन्
विघ्नोभवत्येषमखस्यतस्यक्रूरादिषष्ट्यंशगतेप्येवम् ॥ १३ ॥ तुंगस्थितेसोमसुतेनदीशेस्वोच्चान्वितेसोमसुतेनदृष्टे ॥ शु
भेक्षितेवासबुधेस्वराशौयज्ञस्यकर्ता ॥ १४ ॥ आज्ञास्थानाधिपेसौम्येशुभदृष्टियुतेपिवा ॥ शोभनांशगतेवापिजातस्त्वा ३०

ज्ञाधिपोभवेत् ॥१५॥ आज्ञास्थानगतेसूर्येभूमिपुत्रेथवायुते ॥ केंद्रान्वितेनदीशेपिक्रूरामाज्ञांकरोतिसः ॥१६॥ आज्ञाधि
पेमंदयुतेरंध्रनाथेनसंयुते ॥ क्रूरांशेकेंद्रराशौवाक्रूरामाज्ञांकरोतिसः ॥१७॥ मानाधिपेकेंद्रयुतेशुभयुक्तेक्षितेपिवा ॥
क्रूरषष्ठ्यंशसंयुक्तेसौम्यामाज्ञांकरोतिसः ॥१८॥ राहुमांदियुतेमानेरंध्रेराहोर्ध्वजेपिवा ॥ नीचस्थेधर्मभावेशेक्रूरामाज्ञां
करोतिसः ॥१९॥ शशांकेकार्किसंयुक्तेगुरुशुक्रनिरीक्षिते ॥ पारावतादिभागस्थेसत्कीर्तिसहितोभवेत् ॥२०॥ नदीशेशु
भसंयुक्तेशुभमध्यगतेपिवा ॥ शुभग्रहाणामंशेवासत्कीर्तिसहितोभवेत् ॥२१॥ कीर्तिस्थानाधिपेसौम्येस्वोच्चमित्रस्वव-
र्गगे ॥ सौम्यषष्ठ्यंशकेवापिसः ॥२२॥ नदीशेदेवलोकस्थेसिंहांशेशुभनायके ॥ बलपूर्णेविलग्नेशेसत्कीर्तिसहितोभवेत्२३
पापग्रहाणांसंबंधेमाननाथेबलक्षये ॥ क्रूरषष्ठ्यंशसंयुक्तेसन्कीर्तिसहितोभवेत् ॥२४॥ अपकीर्तियुतोजातःकर्मस्थेचर
वेशिनो ॥ पापांशकेपापदृष्टेपापमध्यगतेपिवत् ॥२५॥ शुभग्रहाणांसंबंधेमानतन्नायकेपिवा ॥ स्वोच्चेवास्वगृहेवापिजातो
मानीदृढव्रतः ॥२६॥ इंगितज्ञोपिमानीस्यान्मानेजीवेथवाशुभे ॥ नदीशेशुभसंबंधेशुभमध्यगतेपिवा ॥२७॥ पापमाने-
पापदृष्टेनदीशेनीचराशिगे ॥ पापराश्यंशकेवापिमानहीनोभवेन्नरः ॥२८॥ मानाधिपेचरांशस्थेसंचारसहितोभवेत् ॥
स्थिरांशस्थैर्यसुहृद्दृष्टेमृगयात्राद्रिदेहगे ॥२९॥ षष्ठेशेकर्मराशिस्थेकर्मेशेमंदसंयुते ॥ केंद्रत्रिकोणगेवापीदासीदासान्वि-

निर्दिशेत् ॥३०॥ कर्माधिपस्यांशपतौ शनिसंबंधसंयुते ॥ षष्ठाधिपस्यसंबंधे बहुदासान्विनिर्दिशेत् ॥३१॥ शुभग्रहेणसंह
ष्टे कर्मराशौ नदीश्वरे ॥ भानुपुत्रेणवायुक्ते बहुदासान्विनिर्दिशेत् ॥३२॥ कर्मनाथेनवाभुक्तिमभ्मे प्रीतिंविनिर्दिशेत् ॥ न
त्रपापसमायोगेजानुदौर्बल्यमादिशेत् ॥३३॥ ॥ अथसन्यासयोगः ॥ ॥ ग्रहैश्चतुर्भिःसहितेनदीशे त्रिकोणगेः
केंद्रगतैस्तुमुक्तः ॥ चतुर्ग्रहैःकेंद्रगतैःप्रव्रज्यामाप्नोतिजातःकथितोमुनींद्रैः ॥१॥ नवीक्षितश्चादितरग्रहेंद्रैर्लग्नाधिपःपश्य
तिभानुपुत्रम् ॥ लग्नाधिपंवायदिभानुपुत्रःसन्यासयोगोहिबलेनहीनः ॥२॥ शनेर्द्रेकाणेकुमुदात्मबंधोमंदेक्षितेनादृशा-
योगमाहुः ॥ मंदांशकेभूमिसुतांशकेवामंदेक्षितेचंद्रयुतेतथैव ॥३॥ सन्यासयोगाधिपतौसराहौक्रूरांशकेवागुलिकेन-
युक्ते ॥ सन्यासवैकल्यमुदाहरंति भंगोभवेत्तस्यशुभैर्विहीने ॥४॥ ॥ इतिकर्मभावः ॥ ॥ अथलाभभावः ॥ ॥
आयेनाथौवाक्षिपादावपिवामकर्णचिंतांच ॥ जातावपिचककुजान्ज्येष्ठान्भूयाद्धनान्याशाम् ॥१॥ लाभेश्वरेकेंद्रगतेत्रिको
णेवासमन्विते ॥ लाभेवापापसंयुक्तेधनलाभमुदीरयेत् ॥२॥ धनाधिपेलाभगतेलाभेशेधनमागते ॥ नावुभौकेंद्रगौवापि
धनलाभमुदीरयेत् ॥३॥ शुभमध्यगतेलाभेतदीशेवानथास्थिते ॥ पारावतादिभागस्थेधन ॥४॥ लाभेशयुक्तराशी
शेशुभग्रहनिरीक्षिते ॥ शुभग्रहाणांमध्यस्थेधनला० ॥५॥ लाभनाथसमायुक्तनवांशाधिपतौशुभे ॥ वित्ताधिपेनसं

दृष्टेधनं० ॥६॥ लाभाधिपसमायुक्तत्र्यंशभागपतौशुभे ॥ कर्मेश्वरेणसंदृष्टेधनं० ॥७॥ पापग्रहाणांसंबंधेधनहानिर्विनिर्दिशे
त् ॥ लाभेश्वरोक्तदिग्भागाद्धनप्राप्तिंविनिर्दिशेत् ॥८॥ लाभराश्युक्तदिग्भागात्सर्वोत्तमबलादपि ॥ बलाबलवशेनैवद्रव्य-
लाभंविनिर्दिशेत् ॥९॥ लाभेपापेनहृहेवा अर्थहानिंविनिर्दिशेत् ॥ लाभेशेपापसंबंधेधननाशंविनिर्दिशेत् ॥ १०॥ कर्ण
स्थानेश्वरेसौम्येशुभदृष्टिसमन्विते ॥ कर्णाधिपेबलवतिकर्णाभरणमिष्यते ॥ ११॥ पापग्रहाणांसंबंधेतन्नाशोत्रभविष्यति
लाभेशात्सोदरेशाद्वा कर्णसौख्यंविनिर्दिशेत् ॥ १२॥ नदीशेशुभसंबंधेकर्णसौ० ॥ नदीशपापसंबंधेकर्णरोगंविनिर्दिशेत् ॥
॥१३॥ ब्रूयाज्ज्येष्ठांशलाभेनशुभपापवशादपि ॥ शुभग्रहाणांसंबंधेदीर्घमायुर्विनिर्दिशेत् ॥ १४॥ पापान्वितेपापदृष्टेनष्ट
निंप्रवदंतिहि ॥ लाभराशेश्चदिग्भागेधनलाभमुदीरयेत् ॥ १५॥ तद्राशिनाथदिग्भागाद्द्रव्यप्राप्तिमुदीरयेत् ॥ लाभराशि
वशादेवंचिंतयेन्मतिमान्नरः ॥ १६॥ इत्यायभावः ॥ ॥अथव्ययभावः॥ ॥ व्ययभवनाद्व्ययमखिलंपतनेनरकेचवैक
ल्यं ॥ वामाक्षिचरणयुगुलंशयनस्थानंविनिर्दिशेत्प्राज्ञः ॥१॥ व्ययेपापसमायुक्तेतदीशेपापखेचरे ॥ पापग्रहेणसंदृष्टे-
पापमूलाद्धनव्ययः ॥२॥ मंदमांद्यग्रुसंयुक्तव्ययवानद्गृहाधिपे ॥ क्रूरांशकसमायुक्तेपापमूलाद्धनव्ययः ॥३॥ व्ययाधिपसमा
युक्तनवभागपतौशुभे ॥ शुभांशेशुभमध्यस्थेधर्ममूलाद्धनव्ययः ॥४॥ गुरुशुक्रौव्ययेवापिबुधचंद्रौशुभेक्षितौ ॥पारा

वनादिभागस्थो धर्म० ॥५॥ व्ययाधिपे त्रिकोणस्थे केंद्रे पापैर्निरीक्षिते ॥ क्रूरषष्ठ्यंशके वापि पापमूला० ॥६॥ पापेन कर्मनाथेन व्य
येशे दृष्टिसंयुते ॥ शत्रुनीचारिभागस्थे पापमू०॥७॥ शुभेन कर्मनाथेन दृष्टे युक्ते व्ययेश्वरे ॥ स्वोच्चमित्रस्ववर्गस्थे धर्म०॥८॥ व्य-
येशे बलहीने वा शत्रुनाथयुतेक्षिते ॥ गुलिकादिसमायुक्ते शत्रुमू०॥९॥ व्ययेशे दारनाथेन बलहीनेन तेन तु ॥ दृष्टे युते वा क्रूरांशे-
स्त्रीहेतोर्धननाशनम् ॥१०॥ तादृशे व्ययनाथेस्मिन् दृष्टे युक्तेथवा भवेत् ॥ तथाविधेन भौमेन भ्रातृमूलाद्धनक्षयः ॥११॥ पुत्रभा
वेश्वरेणापि बलहीनेन संयुते ॥ दृष्टे व्ययेशे क्रूरांशे पुत्रमूलाद्धनव्ययः ॥१२॥ पितृस्थानेश्वरेणापि कारकेणापि वा युते ॥ व्ययेशे
दृष्टिसंबंधे पितृमूलाद्धन०॥१३॥ एवं मातृप्रयोगेन युते दृष्टे व्ययाधिपे ॥ क्रूरान्विते क्रूरभागे मातृमू०॥१४॥ बलहीने तु रिःफे
शे क्रूरराश्यंशकेपि वा ॥ नीचांशे नीचराशौ वा देहवैकल्यमादिशेत् ॥१५॥ बहुपापसमायोगे व्ययतद्भावनायके ॥ मंदमांद्ययुसं
युक्ते देहवैकल्यमादिशेत् ॥१६॥ व्ययेशे पापराश्यंशे क्रूरांशे क्रूरसंयुते ॥ पापग्रहेण संदृष्टे नरके निपतिष्यति ॥१७॥ नरके पत
नं ब्रूयात् राहुमांदियुतेन्त्यये ॥ षष्ठाधिपेन संदृष्टे रंध्रनाथेन वा युते ॥१८॥ व्ययेशयुक्तषष्ठ्यंशे क्रूरभागादिसंज्ञके ॥ क्रूरग्रहेण सं
दृष्टे नरके पतनं वदेत् ॥१९॥ चंद्रार्कयोर्यो बलवान् तद्युक्तव्यंशनायकः ॥ गुरुर्वा चंद्रशुक्रौ वा सूर्यभौमौ ज्ञसूर्यजौ ॥२०॥ देवि
कं पितृलोकं तु तिर्यङ्नरकमेव च ॥ तेषां वदेत् क्रमेणैव तल्लोकः श्रेष्ठ उच्यते ॥२१॥ उच्चस्थे श्रेष्ठलोकः स्यान्नीचे नीचत्वमाप्नुयात् ॥

समस्थिते सप्तमाप्तिरित्याहुर्भ्व महर्षयः ॥२२॥ शुभे स्वोच्चे व्यये वापि सौम्यखेचरवीक्षिते ॥ देवलोकादिभागस्थे स्वर्गप्राप्तिर्भविष्य-
ति ॥२३॥ देवेज्ये कर्मराशीशे व्ययराशिगतेपि वा ॥ शुभग्रहेण संदृष्टे स्वर्गप्राप्ति० ॥२४॥ नेत्रेशे शुभसंयुक्ते शोभनांशसमन्विते ॥
शुभखेचरसंबंधे तन्नेत्रस्य शुभं वदेत् ॥२५॥ अन्यथात्वेद्धदेन्नाशं पादयोरपि तत्तथा ॥ तत्प्रपंचादिकं सर्वं धनभावे प्रदर्शितम् ॥
गुरुशुक्रबुधास्तत्र वाहनं निर्दिशेद्बुधः ॥ वाहनोक्तादिकं सर्वं तदिहात्र विचिंतयेत् ॥२७॥ शुभग्रहाणां संबंधे व्ययेतद्भावनाय-
के ॥ दोलांतु मंचं प्रवदेच्छयनादिसुखं तथा ॥२८॥ व्ययेशे स्वोच्चराशिस्थे शुभवर्गसमन्विते ॥ शुभग्रहेण संदृष्टे पर्यंकशय-
नं वदेत् ॥२९॥ विचित्रमंचशयनं व्ययेशे परमोच्चगे ॥ भाग्यनाथेन वा दृष्टे मणिरत्नविभूषितम् ॥३०॥ पापग्रहाणां संबंधे व्ययेत-
द्भावनायके ॥ क्रूरांशे क्रूरसंदृष्टे शयनादिसुखं नहि ॥३१॥ व्ययेशः पापखेटोपि स्वोच्चमित्रस्ववर्गगः ॥ तस्य नाथोपि तत्र स्था-
ने शयनादिसुखं वदेत् ॥३२॥ नीचे व्यये वा लग्नेशे शत्रुनाथेन वीक्षिते ॥ मंदमांद्यगुसंयुक्ते शयनादिसुखं नहि ॥३३॥ पंचमे भृ-
गुसंयुक्ते चंद्रेण सहितेथवा ॥ ताभ्यां दृष्टेथवा पुत्रे स्त्रीदेवोपास्तिमादिशेत् ॥३४॥ पंचमे पुंग्रहयुते पुंदेवोपास्तिमादिशेत् ॥
पंचमे भानुसंबंधे सूर्यशंकरभाजनः ॥३५॥ चंद्रे तथाविधे जाते यक्षिण्यादिदेवता भवेत् ॥ स्कंदो वा भैरवो वापि सौम्यसंबंधवीक्षि-
ते ॥३६॥ उपास्या शारदा सौम्ये विष्णुर्वा सात्त्विको गुरौ ॥ चामुंडा पंचमे शुक्रसंबंधे तु विनिर्दिशेत् ॥३७॥ शनौ प्रेताशनी प्रोक्ता

श्मशानेनिलयाभवेत् ॥ राहुकेतुयुतेतत्रपरपीडनदेवता ॥ ३८॥ उक्तेष्वेतेषुरवेवेदेषुस्वोच्चमित्रांशकेषुच ॥ तदेवभजनंस्वार्थपरार्थेत्व-
न्यथाभवेत् ॥ ३९॥ सौम्यांशस्थितेषुसर्वेषुमृदंशादिगतेषुच ॥ तदेवसौम्यलाभाच्चक्रूरांशेक्रूरताभवेत् ॥ ४०॥ द्वित्र्यादिग्रहयोगेन-
तद्देवभजनंभवेत् ॥ लग्नाधिपस्यमित्रांशामित्रतान्यत्रमादिशेत् ॥ ४१॥ शत्रुत्वेशत्रुभूतःस्यात्समत्वेसमताभवेत् ॥ लग्नात्द्वादश
राशीनांफलंप्रोक्तंमयाधुना ॥ संगृह्यसारमखिलमध्यायस्त्वष्टमोभवेत् ॥ ४२॥ ॥ इतिसर्वार्थचिंतामणौअष्टमोध्यायः ८
॥ ७॥ ॥ इतिद्वादशभावविचारः ॥ ॥ अथराजयोगाऽध्यायउच्यते ॥ ॥ षड्भिर्ग्रहैरुच्चसमन्वितैःस्याद्राजा-
धिराजोबहुदेशभर्ता ॥ उच्चस्थितैःपंचभिरत्रराजाशत्त्यन्वितोदेवगुरौविलग्ने ॥ १॥ कुंभेविलग्नेभृगुनंदनेवास्वोच्चस्थितेभूमिपति
श्चतुर्भिः ॥ उच्चस्थितैर्नीचवियुक्तभागैःक्रूरादिषष्ठ्यंशविहीनभागैः ॥ २॥ लग्नेवृषेतत्रयुतेशशांकेषड्भिर्ग्रहैरुच्चगतैर्नृपःस्यात्
कस्मिन्गृहेस्वोच्चयुतेतुसर्वैःस्वक्षेत्रगैर्भूपतितुल्यजातः ॥ ३॥ मूलत्रिकोणांकितराशियुक्तैर्मित्रर्क्षगैर्वायदिवक्रयुक्तैः ॥ कस्मि
न्गृहेस्वोच्चयुतेत्रशेषैर्नीचांशहीनैर्नृपतुल्यजातः ॥ ४॥ जनयतिनृपमेकोप्युच्चगोमित्रदृष्टःप्रचुरधनसमेतंमित्रयोगाच्चसिद्धं
विवसविस्फरवसूदव्याधिताबंधनघावधदुरितसमेताःशत्रुनिम्नर्क्षगेषु ॥ ५॥ शशिभंवर्गोत्तमेजन्मवेशिस्थानेचसद्ग्रहे ॥ अशू- ४१
न्येषुचकेंद्रेषुकारकाख्यग्रहेषुच ॥ ६॥ हित्वार्कंसुनफानफादुरुधराःस्वांत्योभयस्थैर्ग्रहैःशीतांशोःकथितान्यथातुबहुभिःके

मद्गुमोन्यैस्त्वसौ ॥ केंद्रेशीनकरेऽथवाग्रहयुतेकेमद्गुमोनेष्यते केचित्केंद्रनवांशकेष्वपिवदंत्युक्तिप्रसिद्धानेन ॥७॥ सौम्यैः स्मरारिनिध
नेष्वधियोगइंदोस्तस्मिंश्वभूपसचिवक्षितिपालजन्म ॥ संपन्नसौख्यविभवाहतशत्रवश्वदीर्घायुषोविगतरोगभयाश्वजाताः ८
लग्नेचंद्रेगुरौसौरव्येकर्मस्थेभृगुनंदने ॥ स्वोच्चस्वर्क्षस्थितेमंदे नृपतुल्योभवेन्नरः ॥९॥ दशमैकादशारिःफे लग्नवित्तसहोत्थभे ॥ ग्र
हास्तिष्ठंतिचेत्सौम्यानृपतुल्योभवेन्नरः ॥१०॥ केंद्रत्रिकोणगाः सौम्याः पापाः षट्लाभसोदराः ॥ लग्नाधिपेबलवतिनृपतुल्योभ-
वेन्नरः ॥ ११ ॥ दृश्यनेयुज्यनेवापिचंद्रजेनबृहस्पतिः ॥ शिरसाशासनंतस्यधारयंतिनृपास्तथा ॥ १२॥ नीचस्थितोजन्मनियो-
ग्रहः स्यात्तद्राशिनाथोथतदुच्चनाथः ॥ सचेद्विलग्नाद्यदिकेंद्रवर्ती राजाभवेद्धार्मिकचक्रवर्ती ॥१३॥ निशाकरेकेंद्र-
गनेविलग्नंत्यक्त्वात्रिकोणेयदिजीवदृष्टे ॥ शक्रेणदृष्टेबलपूर्णयुक्ते जातोनरो भूपतिभाग्यतुल्यः ॥ १४ ॥ ।॥
नीचस्थिताजन्मनियेग्रहेंद्राः स्वोच्चांशगाराजसमानभाग्याः ॥ उच्चस्थिताचेदपिनीचभागाग्रहानकुर्वंतिनथैवभा
ग्यम् ॥ १५ ॥ ग्रहाबलाढ्यायदिपूर्वषट्के स्वोच्चस्थिताः पूर्वदलेनृपः स्यात् ॥ तद्वत्त्वयंपश्चिमभागयुक्ता-
स्मिश्रस्थिताश्चेदुभयत्रभाग्यम् ॥ १६॥ त्रेधाविभज्यतुवयःप्रमाणंखंडत्रयंतत्रवदंतिसंतः ॥ व्ययादिकंशाद्यमिके
चखंडे शुभग्रहाः शोभनमत्रदद्युः ॥ १७ ॥ खंडेद्वितीयेबहवश्चसौम्यास्तथैवसौख्यंतुतृतीयखंडे ॥ खंडेतुयस्मि

नृबहवश्चपापानीचांशगाभूढसमन्विनास्तु ॥१८॥ दुःखंभवेत्तत्रविशेषनस्तुराज्यात्पदभ्रंशसुदाहरंति ॥ एवंभवेच्छोभनखेचरेंद्रैः
खंडान्वितैःशोभनकालमाहुः ॥ ॥ १९ ॥ ॥ लग्नेगुरौबुधेकेंद्रेभाग्यनाथेनवीक्षिते ॥ लग्नेशेवापिसंदृष्टेनृप
तुल्योभवेन्नरः ॥२०॥ सप्तमेजीवसंयुक्तेत्रिकोणेवासमन्विते ॥ लग्नाधिपेनसंदृष्टेनृप०॥२१॥ केंद्रेशनौत्रिकोणेवास्वोच्चमूलत्रिको
णगे ॥ राज्याधिपेनसंदृष्टेनृपमानसमन्वितः ॥२२॥ कर्मेशेरंध्रभावस्थेस्वोच्चांशत्रांशसंयुते ॥ पारावतांशकेवापिराजराजोभवेन्न
रः ॥२३॥ नीचेगुरौविलग्नस्थेरंध्रस्थेवाथधर्मपे ॥ तथाविधांशसंयुक्तेराज०॥२४॥ गुरौव्ययेशनौलाभेरवौवाविक्रमाधिपे ॥ गुरौ-
व्ययेविलग्नेशेराज०॥२५॥ पंचमेजीवसंयुक्तेचंद्रेकेंद्रेबृहस्पतौ ॥ स्थिरलग्नेनदांशोतुराज्यस्थेनृपतिर्भवेत् ॥ २६ ॥ पूर्वषट्केग्रहाः
सर्वेयस्यतिष्ठंतिजन्मनि ॥ भाग्याधिपधनस्थेवासत्त्वंद्रेनृपोभवेत् ॥२७॥ चंद्राधिष्ठितराश्यंशनाथेकेंद्रायकोणगे ॥ बुधान्केंद्र
द्रगेनवापिराजराजोभवेन्नरः ॥ २८॥ निशाकरःसभौमस्तुवित्तेवाविक्रमेपिवा ॥ पंचमेराहुसंयुक्तेराजराजो ॥२९॥ भाग्या-
धिपसमायुक्तनवांशाधिपतौस्वखे ॥ पुत्रस्थानगतेवापिनृपश्रेष्ठोभवेन्नरः ॥३०॥ क्रूरेसकर्मभावेशाग्रहास्तिष्ठंतिचेत्क्रमात्
लग्नादिपूर्वषट्केस्मिन्राजराजोभवेन्नरः ॥३१॥ लग्नेचरेतदांशापिचरराश्यंशकान्विते ॥ भाग्येशेचरराशिस्थेपियायादन्यदेश-
गः ॥३२॥ राजयोगादिसंजातेनयावान्योन्यथानहि ॥ उत्तमांशगतेचंद्रेगुरौनीचांशवर्जिते ॥३३॥ शुभषड्वर्गस्यशकेस्सूर्येनृपतुल्यो

भवेन्नरः ॥ त्रयोवाद्वौरवगोवापिचत्वारोनीचसंयुताः ॥ शुभषष्ठ्यंशसंयुक्ताः स्वोच्चांशेवाधरापतिः ॥ ३४ ॥ नीचस्थितांशनाथ
स्तुखेटः केंद्रत्रिकोणगः ॥ चरलग्नेनदीशेतुचराशादोनृपोभवेत् ॥ ३५ ॥ मानेराहोभवेन्मंदे भाग्यनाथेनवीक्षिते ॥ लग्नेशेनीचखेटे
नयुतेनृपसमोभवेत् ॥ ३६ ॥ अंशतोभावतोवापिस्वोच्चमूलत्रिकोणगः ॥ राजयोगास्तुनिर्दिष्टास्तेषांयोगबहुलता ॥ ३७ ॥ ॥
॥ ॥ अथजातकभंगः ॥ ॥ जीवेसकेतौयदिवासराहौचंडालतापापनिरीक्षितेचेत् ॥ नीचांशगेनीचसमन्वितेवाजीवेद्विज
श्चेदपिनाहशःस्यात् ॥ १ ॥ ध्वजाहिमंदैःसहितेद्रपूज्येशुक्रेक्षितेवाशशिसूनुदृष्टे ॥ शूद्रोपिचेद्विप्रसमानमेतिविद्याञ्चसर्वाम-
धिगम्यजातः ॥ २ ॥ मेषशशांकेरविसूनुदृष्टेभिक्षाशनोभूमिसुतेनदृष्टे ॥ निःश्रीविलग्नस्थनिशाकरस्यतुच्छोदिनेशात्मजदृष्टि
योगात् ॥ ३ ॥ शुभग्रहाणामवलोकनेनहीनाद्रवेन्तत्रसमन्विताद्वा ॥ तत्कालहाराधिपतौधराजेकेंद्रेशनौचेद्यदिवाविलग्ने ॥ ४ ॥ शु
भग्रहाणामवलोकहीनेदासस्तुभिक्षाशनदेहशीलः ॥ पापमध्यगतेचंद्रेसमेमदसंयुते ॥ श्वासक्षयप्लीहगुल्मविद्रधिभाज
तेनरः ॥ ५ ॥ वैशोसमंदे दशमेस्तचंद्रे वैकल्यमंगांक्षितिजेकलत्रे ॥ परस्परक्षेत्रनवांशयुक्तौशशांकसूर्यौतनुशोषणस्यात् ॥ ६ ॥ दि
नेशचंद्रौरविराशियुक्तौचंद्रक्षगौवायदिशोषणंतत् ॥ चंद्रार्धविस्तांत्यगतौयदेहद्वादिनेशचंद्रारयमाःक्रमेण ॥ ७ ॥ कुर्वंतिजातंन
यनेनहीनंतद्वातुकोपाद्बलसंयुतस्य ॥ लग्नेगुरौभूमिसुतेनकलत्रेउन्मादभाक्तत्रनरोहिजातः ॥ ८ ॥ उन्मादयुक्तःशयुतोविलग्ने शा

नोकलत्रेसकुजेत्रिकोणे ॥ लग्नेशनोरिः फगतेदिनेशेचंद्रेत्रिकोणेयदिवाधराजे ॥ ९ ॥ उन्मादबुद्धिः सजडोथवास्याज्जातोहिचेच्चंचल
बुद्धियुक्तः ॥ लग्नत्रिकोणदिननाथचंद्रोशौर्यगुरोकेंद्रसमन्वितेवा ॥ १० ॥ उन्मादबुद्धिः सभवेत्तदानींशन्यारवारोयदिजन्मकाले ॥
केंद्रस्थितोसौम्यनिशाकरेवासौम्यांशहीनोप्यमसंयुतः स्यात् ॥ ११ ॥ केंद्रस्थितामंदनिशाकरार्कोजडोभवेदन्यवसूपभोक्ता ॥ –
भाग्येश्वरेरीःफगतेनदीशेवित्तस्थितेभ्रातृगतेश्चपापे: ॥ १२ ॥ केमद्रुमेस्मिन्सभवेत्कुभोजीदुःकर्मयुक्तोन्यकलत्रगामी ॥ नीचेविल
ग्नाधिपतोनदंशेषष्ठाष्टमस्थेयदिपापखेटैः ॥ १३ ॥ मांदोविलग्नेकुलनाशकःस्यादल्पायुराहुःशुभदृष्टिहीनेः ॥ सर्वग्रहेनीचसपत्न
भागेः कर्मान्यगेर्भिक्षुक एवजातः ॥ १४ ॥ होरेश्वरेरीःफगतेतुमानेक्रूरान्वितेभौमयुतेशशांके ॥ जातोभिशस्तःपरदेशवासीभि
क्षाशनीदुःखितदेहभाक्स्यात् ॥ १५ ॥ रंध्रस्थिताःपापखगाश्चसर्वेनिशाकराक्षौयदिकेंद्रयुक्तो ॥ योगेगदाख्येसभवेत्तदानीं
जातोप्यपस्मारयुतःक्षतस्थः ॥ १६ ॥ समन्विताःसौम्यशशांकशुक्राःकेंद्रस्थिताभोगिनाथेविलग्ने ॥ चंडालयोगःसभवेत्तदा
—— नीजातोनिजाचारस्कर्महीनः ॥ १७ ॥ षष्ठाष्टमेभानुसुतेसभौमेजातोप्यपस्मारयुतोनरःस्यात् ॥ पापग्रहाःषट्व्य
यरंध्रभेषुजीवेपरिध्यन्वितकेंद्रहीने ॥ १८ ॥ जातःपरिभ्रंशसमन्वितःस्याच्छुभैर्नयुक्तानचदृष्टिहीनाः ॥ मानेस्थितावायदि
वित्तराशौपापास्तथादेवगुरोच्चहीने ॥ १९ ॥ भाग्येश्वरेचान्यगतेसपापेजन्मोदयेशौरविगोकुलघ्नः ॥ विनष्टपुत्रार्थकलत्रभा

कुस्थानशुभैर्नयुक्तोयदिवीक्षितोवा ॥२०॥ शुभाशुभैः केंद्रगतैः शशांकोलग्नेश्वरेणापिनिरीक्षितश्चेत् ॥ सौरांशकेवायदिसं
युतश्चेज्जातः कुलध्वंसकरोविदारः ॥२१॥ गृहात्परिभ्रष्टविदारपुत्रोगुणेनहीनोयदिवाजडोसौ ॥ केंद्रेशनौलग्नगतेशशांके
जीवेव्ययेभिक्षुकएवजातः ॥२२॥ चंद्रात्सुतेर्थेयदिलग्ननाथेरंध्रस्थितेः सौम्यखगेतरैर्वा ॥ मानस्थितेराशिकरेतदानींजा
तस्तुजीवत्यतिहेयवृत्त्या ॥२३॥ लग्नाधिपान्मृत्युषष्ठव्ययस्थैः पापैर्जातोजन्मभूमेर्हिभ्रष्टः ॥ नीचारिभांशेयदिदेवपू-
ज्येतदंशकेवासरनाथपुत्रे ॥२४॥ जातोतिदुःखीसुतदारहीनः कृच्छ्रादसौजीवतिभाग्यहीनः ॥ उच्चस्थितेवासरनायके
तुनीचांशयुक्तेयदिराजपुत्रः ॥२५॥ प्राप्नोतिनीचत्वमिनोदयेस्यात्पापेक्षितेवायदिनिश्चितार्थः ॥ तुलायांदशमेभागेस्थि
तः पंकजबांधवः ॥ सहस्रराजयोगानांफलंनीचत्वमाप्नुयात् ॥२६॥ भृगोःपुत्रोपिनीचस्थोराजयोगविनाशदः ॥ उल्कापा
ताद्यप्रकाशग्रहजातोपिभंगगे ॥२७॥ नीचेभृगौमंदनवांशकेवाव्ययेस्थितेचंद्ररवीकलत्रे ॥ निरीक्षितोभानुसुतेनचात्रजा
तःपरप्रेष्यमुपैतिनित्यम् ॥२८॥ क्षीणेशशांकेक्षितिजेकलत्रेलग्नेशनौभ्रंशदशान्वितःस्यात् ॥ लग्नेशनौकर्मगतेशशां
केशुक्रेक्षितेवायदिबंधभोक्ता ॥२९॥ चंद्रेव्ययेवायदिवादिनेशेमंदेत्रिकोणेमदरंध्रभेके ॥ मंदाक्षिरोगीसभवेत्तदानीं
नीचारिशत्र्वंशगतास्तथैव ॥३०॥ सुतांबुगोपापखगोविशेषाच्चंद्रेस्फुरःफारिगतेधनास्यात् ॥ शुभग्रहाणामवलोकही-

प्र.प्र. नेत्रांधो भवत्येव शुभैर्न दोषः ॥ ३१॥ मानेशशांके सबुधे कलत्रे शनौ द्वितीये विकलांगमेति ॥ जातिच्युतिर्नीचखपत्नभागसमन्वि अ.
४४ ता स्त्रीपापविनिश्चितार्थः ॥ ३२॥ निशाकरे कार्मुकमध्यभागमृगास्यकर्काद्युषभागयुक्ते ॥ मंदारयुक्ते तदवेक्षणे वा कुष्ठी भवे ९
त्सौम्यदृशाविहीने ॥ ३३॥ कुलीरकुंभालिनवांशयुक्ते चंद्रे समांदो यदि गुल्मरोगी ॥ चंद्रे स्फुरत्वनद्भवनांशयुक्ते पापान्विते स्या
द्धृजकंठरोगी ॥ ३४॥ चंद्रे सपापफणिनाथयुक्ते रिःफे शुभैरप्यगतेथवापि ॥ उन्मादभाक्तन्नसरोषतावजातस्तु नित्यं कलहप्रि
यः स्यात् ॥ ३५॥ चंद्रे सगो कर्कटराशियुक्ते पापान्विते नन्दिपरीनयुक्ते ॥ उन्मंडलस्थौ शशिभौमसंज्ञौ पापान्वितौ सौम्यदृशा
विहीनौ ॥ ३६॥ त्वक्छूलभाक् जातनरस्तु नित्यं तथैव तौ सप्तमराशियुक्तौ ॥ केंद्रे शनौ जन्मनि येन दृष्टे जीवे शशांके यदि वादिने-
शे ॥ विलग्नगे स्यात् द्यादि भाग्यहीनः प्राप्तार्थचौरोऽसुनयो वदंति ॥ ३७॥ व्ययेशशुभेशे यदि पापखेटे केंद्रस्थिते ज्ञानधनादिहीनः
परान्नभुक् दुःखितदेहभाक् स्याच्छुभेन दृष्टे कलहप्रियो वा ॥ ३८॥ केंद्रे गुरो तज्जनके न काले न कर्म वेदोक्तमथास्ति नास्ति ॥ पि
तुः स्मृतो वा यदि वा न कुर्याद्‌र्ध्वं तु न कर्म शुभैर्विहीने ॥ ३९॥ केंद्रे शशांके क्षितिसूनुयुक्ते रंध्रस्थिते वा यदि कश्चिदस्ति ॥ सं
वाहनाद्धीनसुशीनतज्ज्ञाः स्फुरवस्थिते क्षीणनिशाकरे तु ॥ ४०॥ रवौ स्फुरत्वपापदृशा समेते देहोष्णमाहुः स्फुरषमाहुरार्याः ॥ र ४४
वेः शशांके नवमस्थिते तु जले मृतिस्तस्य पितुश्च वाच्या ॥ ४१॥ पापेक्षितौ चंद्ररवी झषस्थौ जले मृतिस्तस्य पितुश्च वाच्या ॥ कु

जाहिसुक्ते दिवसेशपुत्रेस्फरवेशनौवाभयमस्यवाच्यं ॥४२॥ नीचेभृगौधर्मगतेसपापेद्विजप्रहर्नोयदिपापदृष्टे ॥ विकर्णनामेमनि
जाहिसुक्ते दिवसेशपुत्रेस्फरवेशनौवाभयमस्यवाच्यं ॥४२॥ नीचेभृगौधर्मगतेसपापेद्विजप्रहर्नोयदिपापदृष्टे ॥ केंद्रेसपापेशफ्रभदृष्टि
फणीद्रसुक्तेमानेनदाभोमसुतेशिशफ्रभः ॥४३॥ नीचेगुरौवासरनायकेवाकेंद्रस्थितेपापसुतेशिशफ्रभः ॥ नीचांशगोसौम्यदृशा
सुक्तेरंध्रेभृगौगोसृगजानिहंता ॥४४॥ शशांकसौम्योदशामस्थितौवापापेक्षितौपापसमागमोवा ॥ चंद्रेव्ययेवामदभेसशफ्र
विहीनोजातस्तुनित्यंखलुपक्षिहंता ॥४५॥ रंध्रेगुरौर्नीचसमन्विनेवागलांतमृत्युंप्रवदंतितज्ज्ञाः ॥ तस्मिंछनौवायदिवास
रेजातस्यवामनयनंहिनास्ति ॥४६॥ रंध्रेत्रिकोणोदवसाधिनाथेजातस्यगेहेशिथिलीभयंस्यात् ॥ तत्रस्थितेसोमसुतेनचंद्
केतौपनेनदानींकृकलासजातिः ॥४७॥ कोल्यादिपातित्यसुशांतितज्ज्ञास्तत्रैववराहोतुकुजेतुकोर्मे ॥ तत्रस्थितेसोमसुतेनचंद्
केतौपनेनदानींकृकलासजातिः ॥४७॥ कोल्यादिपातित्यसुशांतितज्ज्ञास्तत्रैववराहोतुकुजेतुकोर्मे ॥ वंध्यास्त्रियासंगमनंरवौस्यान्मंदेशशांके
शशफ्रकेतुनिद्रापतनंस्त्रियश्च ॥४८॥ तत्रैवमंदेपननंनराणांबलाबलंवित्यवदंतदानीं ॥ वंध्यास्त्रियासंगमनंरवौस्यान्मंदेशशांके
शशफ्रकेतुनिद्रापतनंस्त्रियश्च ॥४८॥ तत्रैवमंदेपननंनराणांबलाबलंवित्यवदंतदानीं ॥ बुधेतुवेश्यागमनंमदस्थेहीनांगनासंगमनंवणिग्
भवनसमान ॥ रजस्वलासंगमनंकुजेतुवंध्यांगनासंगमनंचवाच्यं ॥४९॥ बुधेतुवेश्यागमनंमदस्थेहीनांगनासंगमनंवणिग्
भवनसमान ॥ रजस्वलासंगमनंकुजेतुवंध्यांगनासंगमनंचवाच्यं ॥४९॥ सपुष्पिणीजातिविहीनतावागम्याभवेत्तनशनिध्वजा
जा ॥ मंदेगुरौब्राह्मणभार्ययावाभृगौतुगर्भान्वितभामिनीवा ॥५०॥ सपुष्पिणीजातिविहीनतावागम्याभवेत्तनशनिध्वजा
धैः ॥ राहौमंदेगर्भिणिसंगमस्यात्कृष्णाचकुज्जाशशिनावदंति ॥५१॥ स्फरवस्थितेरीदृशसंगमस्तुवाच्यस्तदाव्योमचरैर्वि
शेषात् ॥ सूर्यादिभिर्व्योमचरैःस्फरवस्थैर्वाच्यस्तयोःसंगमनस्यशालां ॥५२॥ वनंगृहंशून्यगृहंविहारस्थानंतुदेवालयनो

यभूमिः ॥ हरीशजस्थानमतीवदुर्गस्थानंतुवानिर्जिततोयभूमिः ॥ ५३ ॥ केंद्रेचतुष्केयदिपापयुक्ते जातः पशूनांमिथुनंसमेति
केंद्रत्रिकेपापयुतेयदिस्यात्पश्वादिवन्मैथुनमेतिजातः ॥ ५४ ॥ क्रूरांशस्तनाम्भूमिसक्तेमदस्थे लंबस्तनामंदफणींद्रकेतौ ॥ का
ठिण्यतश्चोर्ध्वकुचारवौस्याच्छेषग्रहे रुन्नमकोमलस्तनी ॥ ५५ ॥ चंद्रेक्षशांगपरिजीर्णगेहेतस्मिन्बालेष्वेस्कृदंदनवीने ॥ दुस्थेयदि
स्याच्छनिराहुकेतौदाहेननसंनियमेनवाच्यम् ॥ ५६ ॥ धनायपोलग्नपतेस्तुमित्रे धनंतदीयेद्विजदेवनार्थे ॥ इतिचिंतामणौप्रो–
क्तंराजयोगादिनिर्णयं ॥ जातभंगादिकंचैवव्यंकटेशेनधीमता ॥ ५७ ॥ ॥ इतिसर्वार्थचिंतामणौनवमोऽध्यायः ॥ ९ ॥ ॥
केचिद्योगंप्रशंसंतिदशांकेचिद्वदंतिहि ॥ तद्विनाचायुषंज्ञातुंनशक्यंतुमनीषिभिः ॥ १ ॥ त्रिविधाश्चायुषांयोगाः स्वल्पायुर्मध्य–
मोत्तमाः ॥ द्वात्रिंशात्पूर्वमल्पंस्यात्तदूर्ध्वंमध्यमंभवेत् ॥ २ ॥ आसप्तत्यांनस्तदूर्ध्वंतुदीर्घायुरितिसंमतं ॥ उत्तमायुः शतादूर्ध्वमिह
शंसंतितद्विदः ॥ ३ ॥ आद्वादशाब्दाज्जंतूनामायुर्ज्ञातुंनशक्यते ॥ जपहोमचिकित्साद्यैर्बालरक्षांतुकारयेत् ॥ ४ ॥ पित्रोर्दोषै–
र्मृताःकेचित्केचिद्बालग्रहैरपि ॥ अपरेरिष्टयोगाच्चत्रिविधाबालमृत्यवः ॥ ५ ॥ जन्मतःप्रबलेनैवबालानांपुष्टिवर्धनं ॥ कथयेद
वशेषंतुतत्तद्योगानुरूपतः ॥ ६ ॥ अल्पायुर्लग्नपेभानोःशत्रौमध्यंतुमध्यमे ॥ मित्रेलग्नेश्वरेतस्यदीर्घमायुरुदाहृतं ॥ ७ ॥ अल्पा
युर्योगजातस्यविपद्दायेमृतिंवदेत् ॥ जातस्यमध्यमेयोगेप्रत्यरेस्तुमृतिर्भवेत् ॥ ८ ॥ दीर्घायुर्योगजातानांवधभेतुमृतिर्भवेत् ॥ 

त्रिषुयोगेषुसर्वेषुप्रत्येकंत्रिविधंभवेत् ॥ ९ ॥ चरस्थिरेतिसूत्रेणदीर्घमध्याल्पकायुषः ॥ तयोरन्यतमंज्ञात्वाचायुर्ज्ञानंभवत्सने १०
अल्पायुरल्पमध्यंतुपूर्णायुस्त्रिविधंस्मृतम् ॥ मध्यमादल्पमध्यंतुपूर्णायुस्त्रिविधंभवेत् ॥ ११ ॥ दीर्घायुषोल्पमध्यंतुपूर्णायुस्त्रिविधं
भवेत् ॥ एवंनवविधःप्रोक्तश्चायुषांतुविनिर्णयः ॥ १२ ॥ पंचम्यारदशामृत्युदद्यात्षष्ठीगुरोर्दशा ॥ शनेश्चतुर्थीमृत्युःस्याद्दशारा-
होश्चसप्तमी ॥ १३ ॥ विपत्याकदशाकष्टाप्रत्यरीशादशातथा ॥ वधभेशादशाकष्टापापास्याद्दशभेक्षिता ॥ १४ ॥ नीचारातिविमू
ढस्यविपत्प्रत्यरिनेधनाः ॥ दशादद्युर्मृतिंतस्यपापेयुक्ताविशेषतः ॥ १५ ॥ राशिसंधिषुयेजातास्तेबालामृतजीवनाः ॥ पा-
पदृष्टायुतावापिनिःसंशयमृतिःस्मृता ॥ १६ ॥ गंडान्तेभूद्भवोमर्त्यःपितृमातृबलान्ततः ॥ यदिजीवित्स्वर्गपालोगजवाजिस
मन्वितः ॥ १७ ॥ तृतीयगोभानुनिशाकरोवाक्रूरर्क्षगोक्रूरनिरीक्षितोवा ॥ व्याधिंनरस्यापिवदंतितज्ज्ञाःत्रिवर्षमात्रंत्वतिदुर्लभं
तत् ॥ १८ ॥ चंद्रात्स्मरेवासरनाथभौमौकुजोदयेवामरणदशाहात् ॥ उद्यद्द्रेष्काणजात्रित्रेयस्यस्याद्दारुणोग्रहः ॥ १९ ॥ क्षीणचंद्रे
विलग्नस्थेसद्योहरतिजीवितं ॥ आपोक्लिमेस्थिताःसर्वेग्रहाबलविवर्जिताः ॥ षण्मासंवाद्विमासंवातस्यायुःसमुदाहृतम् ॥ २० ॥ वि
लग्नाधिपतिर्नीचेनिधनेवार्कसंयुते ॥ कृच्छ्रेणजीवनंविद्यान्मृतप्रायोभविष्यति ॥ २१ ॥ केतोरुदयःपूर्वेपश्चादुल्काग्निपवन-
निर्घाताः ॥ रौद्रेसार्पेमुहूर्तेप्राणैःसंत्यज्यतेजंतुः ॥ २२ ॥ ग्रहणपरिवेषकालेजातःपापान्वितेविलग्नस्थे ॥ लग्नेशेबलहीने

जीवतिपक्षत्रयत्रिमासंवा ॥ २३॥ अंशाधिपतिर्जन्मपतिर्लग्नपतिश्चास्तमुपगतोयस्य ॥ जन्मवसानमरणंतस्य भवेत्कथितपया
हन ॥२४॥ संधिचतुष्टयकालेजातोमृत्युंसमादिशेत्तज्ज्ञः ॥ पापयुतेवादृष्टेशीघ्रंसौम्यैरदृष्टयुते ॥ २५॥ राहोकेंद्रेपा
पयुक्तेक्षितेवाक्षिप्रंनाशंयातिसौम्यैरदृष्टे ॥ पापःकेंद्रेवार्कि लग्नत्रिकोणेसौम्यैःषष्ठेचाष्टमेत्यन्चबालः ॥ २६॥ जातः
क्षीणशीतगोलग्नसंस्थेपापैर्दृष्टेनाशमाशुप्रयाति ॥ उच्चक्षेत्रेभेषराशिंचहित्वाराहुर्युक्तस्तत्क्षुपिप्राणनाशः ॥ २७ ॥ ल
ग्नात्सप्त्यापापयुक्तोयदिस्तःसमात्स्वात्त्योवाविनश्येत्क्षणेन ॥ लग्नाद्बालेचाष्टमेपापचारेःसोमक्षीणेत्वष्टमाब्दंचजीवेत्
॥२८॥ केंद्रेश्चंद्रात्पापयुक्तेरसौम्यैःस्वर्गयातिप्राप्यनेवत्सरेण ॥ जन्माधीशेलग्नगेक्रूरयुक्तेपश्यत्यार्किश्चाष्टमेजीववर्जे
॥ २९॥ षष्ठेवर्षेद्वादशेवाष्टमेवासंधौराशेर्जातकोमृत्युमेति ॥ षष्ठेष्टमेवाहिमगोच्चयस्यक्षीणेव्ययेपापयुतेथवापि ॥ ३०॥
सौम्यैर्दृष्टेत्वष्टमाब्दंचजीवेत्पापैःसौम्यैर्मिश्रितस्तत्दलारव्यं ॥ जीवेविलग्नेमिथुनेतुलायांशुक्रेणयुक्तेशशिसूनुनापि ३१
पापैर्दृष्टेमृत्युराशिस्थितेर्वाजीवेद्वर्षंचाष्टमंचेवबालः ॥ लग्नक्षीणेशशिनिनिधनंरंध्रकेंद्रेषु पापैःपापानस्थेनिधनहिबुकद्यु
नयुक्तेचचंद्र ॥ ३२॥ एवंलग्नभवतिमदनच्छिद्रसंस्थेश्चपापैर्मात्रासार्धयदिनचशुभैर्वीक्षितःशक्तिमद्भिः ॥ ३३॥ राहुर्ग्र
स्तेशीनरश्मौविलग्नेक्रूरैर्युक्तेचाष्टमभूमिपुत्रे ॥ मात्रासार्धंचंद्रवक्रास्करेपिशास्त्रैःपातेनाशमृत्युंप्रयाति ॥ ३४॥ अस्तग

तेदिनपतौरविजेविलग्नेभौमेथवानिधनगेव्रजति तृतीयात् ॥ एवंस्थितेपिहिमगावशुभैरदृष्टेराहुग्रहेचनिधनंभवतीहवाष्टे
॥ ३५ ॥ बृहस्पतिर्भौमगृहेष्टमस्थः सूर्येंदुभौमार्कजदृष्टमूर्तिः ॥ अब्दैस्त्रिभिर्भार्गवदृष्टिहीनोलोकांतरंप्रापयतिप्रसूतं
॥ ३६ ॥ वक्रीशनिर्भौमगृहंप्रपन्नश्छिद्रेचषष्ठेचचतुष्टयेवा ॥ कुजेनसंप्राप्तबलेनदृष्टोवर्षद्वयंजातवियातप्रजातं ॥ ३७ ॥ सौरो
स्मरस्थेयदिवाविलग्नेजन्मस्थलग्नेशशिवृश्चिकेवा ॥ सौम्येषुकेंद्रापगतेषुसद्योजातस्यमृत्युर्यवनोपदिष्टः ॥ ३८ ॥ नीचस्थ
देवपूज्येतुभौमक्षेत्रगतेथवा ॥ संधित्रयेपिजातस्तुमासान्मृत्युंप्रयच्छति ॥ ३९ ॥ क्षेत्रस्यसंधौतिथिराशिसंधौएकत्रजातस्तु
प्रसवस्त्रिधास्यात् ॥ जातश्चमृत्युंसमुपैतिसद्यः शुक्रेन्दुजीवैर्दितिनंदिकोक्तं ॥ ४० ॥ षष्ठ्यांजातश्चार्कलग्नेकुजेवागंडांते
तथामृत्युयोगेथवापि ॥ सोमोहंतिप्राणिनांतत्क्षणेनजीवेक्षितेचेन्नभवेत्प्रजातः ॥ ४१ ॥ सोमोदयेनाद्विवसेकुशोदो-
होरास्वामीलग्नकेंद्राद्बहिष्ठः ॥ जातोयोसौक्षिप्रमेवैतिमृत्युं सौम्यः सौराप्यैवमेवावधत्ते ॥ ४२ ॥ स्तनमदनवात्यलग्नरंध्रेष्व-
शुभसुतामरणायशीतरश्मिः ॥ भृगुसुतअभिपुत्रदेवपूज्यैर्यदिवलिभिर्नसुतोविलोकितोवा ॥ ४३ ॥ होरास्त्वाष्टमगेष्व-
सुतस्तुहिमगोक्षीणेतुजातः शिशुः स्वर्गंगच्छतिसौम्यकेंद्ररहितोजीवोनचेद्दृश्यते ॥ लग्नात्त्याष्टमधर्मभेषुसहिताश्चंद्रा
र्कभौमार्कजाः क्षिप्रंगच्छतिचांतकस्फुरणंतंमंत्रीनचेद्वीक्षितः ॥ ४४ ॥ लग्नेचंद्रेभास्करेवाबलिष्ठेपापैःकेंद्रेनेधनेचत्रिकोणे

शुक्रः सूर्यः शनिरुश्चैकसंस्थानाशंगच्छेद्योगमेवैतिजातं ॥४५॥ मेषेविंशतिभागेस्थानुमृत्युंदद्यान्निशाकरः ॥ एकविंशति
भागस्तु सिंहेनत्वेस्तुगोवृषे ॥ अष्टमोमेषचंद्रस्तुत्रयोविंशतिभागकः ॥ द्वाविंशतिः कुलीरेतुतुलायांवेदभागकः ॥४७॥ विं
शतिर्मकरेचंद्रः कन्यायांप्रथमांशकः ॥ धन्विन्यष्टादशोभागोमीनेदशमभागयुक् ॥४८॥ द्वाविंशतिर्नृयुग्मेतुचंद्रोप्येवंमृतिप्र
दः ॥ येयेनिशाकरांशास्तुमृत्युभागाविवक्षिताः ॥४९॥ नावर्द्धिवत्सरेजातोमृत्युमेतिनसंशयः ॥ लग्नजन्मपयोर्यस्तु शत्रुलं
ग्नगतः शुभः ॥५०॥ करोतिमृत्युंजातस्यतयोर्मित्रंशुभाशुभं ॥ रंध्रेधरासूनुर्दिनेशसौराजानस्तुमृत्युंसमुपेतिमासात् ५१
केतुश्चयस्मिन्नुदितग्रजातोमासद्वयेनैवयमंप्रयाति ॥ भूपालयोगायवनैः प्रदिष्टाराज्ञः कुलेजातनराधरेशाः ॥५२॥ नैमि
त्तयोगास्तुतदन्यजाताःसद्यायमयांतिनरास्तथैव ॥ भानुर्नभस्थोयदिपापदृष्टाधरासुतर्क्षेशशिनश्चगेहे ॥५३॥ जातस्तु
मृत्युंसमुपेतिशीघ्रंशुभैर्नदृष्टोवियुतोपिचैवं ॥ लग्नेयेद्रेष्काणानिर्गलाहिविहंगपाशाधरसंज्ञाः ॥५४॥ मरणायससवर्षैः
क्रूरयुताश्चापिसंदृष्टाः ॥ रविचंद्रभौमगुरुभिः कुजगुरुसौरेंदुभिस्तथैकस्थैः ॥५५॥ रविशनिभौमशशांकेमरणंखलु-
पंचभिर्वर्षैः ॥ रविणायुक्तः शशिजः सौम्यदृष्टोविनाशयतिनूनं ॥५६॥ एकादशभिर्वर्षैर्दिवांकोपिस्थितंजातं ॥ लग्नेरविश-
निभौमैः शुक्रगृहेसप्तमेशशीक्षीणः ॥ दृष्टोनदेवगुरुणासप्तभिरब्दैर्विनाशयति ॥५७॥ केंद्रेरविसुषिननजुः क्षितिजोमंदाश्च

लोकितोथयुतः॥ वर्षचतुष्केणाशुभमारयतिकिमत्रगणितेन ॥५८॥ लग्नाधिपतेश्चंद्रोमरणपदस्थोपक्षणतांयाति ॥ क्रूरैःसक-
लैर्दृष्टोनशुभैर्वर्षैस्त्रिभिस्तुमारयति ॥५९॥ पापोविलग्नाधिपतिःशशांकादस्तस्थितःक्रूरनिरीक्षितश्चेत् ॥ चंद्रांशकस्थोय
दिवानदीशोजातःशिशुःभेनपुरींनवाब्दैः ॥६०॥ दृश्येभागेसंयुताःसौम्यखेटाःपापाःसर्वेयस्यजन्मन्यदृश्ये ॥ राहोलग्ने-
पापयुक्तेयदृष्टेजातोमृत्युंयातिपञ्चाब्दसंख्यैः ॥६१॥ राहुःसप्तमभवनशशिसूर्यनिरीक्षितोनशुभदृष्टः ॥ दशभिर्होम्यास
हितेरब्देर्जातंविनाशयतिनूनं ॥६२॥ यदालिसिंहेफणिनाथयुक्तेतस्मिन्विलग्नेसतिपापदृष्टे ॥ जातोयमंसप्तदशेप्रयातिवर्षेदृपू
ज्येनयुतोनदृष्टः ॥६३॥ क्षीणेंदुःपापसंदृष्टोराहुदृष्टोविशेषतः ॥ जातोयमपुरंयातिदिनैःकतिपयैरपि ॥६४॥ जन्मेशलग्नाधिप
तीविलग्नात्सप्तमाष्टमांत्येषुदिनेशयुक्तौ ॥ जातोधनद्वादशभिश्चवर्षैःप्रयातिसौम्यैर्नयुतोनदृष्टो ॥६५॥ होराधिपतिर्द्यूनेपापजितोस
रणमेवविदधाति ॥ राशित्रिगुणीकृत्वावर्षंमासेनसंदेहः ॥६६॥ तरणींदुकुजाःपुत्रस्थानेयुक्तानसौम्यगाः ॥ जातोयमपुरंयातिन
वमब्देनसंशयः ॥६७॥ लग्नेश्वरेविलग्नस्थेपापैःसर्वैःप्रयुज्यतादृश्ये ॥ चतुर्थेमासिमरणंयातिपुत्रोनसंशयः ॥६८॥ चंद्रलग्ना-
धिपःसूर्यःसपुत्रेणसमन्वितः ॥ लग्नादष्टमराशिस्थोद्वादशाब्देस्थितेक्षितः ॥६९॥ षष्ठाष्टमेपापयुतेसौम्यदृष्टिविवर्जिते ॥ आ
पोकुमेविलग्नेशेषोडशेनिधनंव्रजेत् ॥७०॥ परस्परक्षेत्रसमास्थितोवालग्नेशरंध्राधिपतीनसौम्ये ॥ रिःफारिभवागधिपनयुक्ते

विं. चंद्रःसंपूर्णगात्रस्तुसौम्यक्षेत्रांशगोपिवा ॥ सर्वारिष्टनिहंतास्याद्विशेषाच्छुक्रवीक्षितः ॥ ४ ॥ जीवभार्गवसौम्यानामेकःकेंद्रगतो अ.
४९ बली ॥ पापदृग्योगहीनश्चेत्सद्योरिष्टस्यभंगकृत् ॥ ५॥ चंद्रोपिशत्रुराशिस्थोजीवशुक्राविदांयथा ॥ द्रेष्काणांशमपत्येवद्दुष्टपा ११
पंहरिर्यथा ॥ ६ ॥ शुक्लपक्षेयदारात्रिजन्मचंद्रोपिषष्ठाष्टमराशियुक्तः ॥ शुभेक्षितेसन्निहत्कृष्णपक्षेदृश्यःसपापैरवतिप्रसूतं
७ निशाकरेशोभनखेचरांशेशुभेक्षितेनूरिनदीप्तिजालः ॥ जातस्यनिःशेषमरिष्टमाशुयथाविषंनिम्नतिवैनतेयः ॥ ८ ॥
प्रकाशमानेगगनेंद्रपूज्येकेंद्रस्थितेरक्षतिजातसूनुं ॥ सौम्यांशकाजीवशशांकशुक्रसौम्यानिहंत्याशुसमस्तदोषं ॥ ९ ॥ जन्मा
धिपःकेंद्रगतःशुभश्चेज्जातंशिशुंरक्षतिसौम्यदृष्टः ॥ स्वांशस्थितेःशोभनखेचरेंद्रेर्दृष्टस्तदान्योविनिहंत्यरिष्टम् ॥ १० ॥ ल
ग्नात्तृतीयारिभवेसराहोपापैर्विमुक्तःशुभदृश्यमानः ॥ विनाशयत्याशुसमस्तारिष्टंतूलोयथावायुबलस्यवेगात् ॥ ११ ॥ शीर्षो
दयस्थाःसकलाग्रहेंद्रारिष्टंहरंत्याशुशुभांशकस्थाः ॥ पूर्णेंदुरन्यैर्वियुतःशुभैस्तुदृष्टोहरत्याशुसमस्तारिष्टं ॥ १२ ॥ सर्वग्रहें
द्रैःपरिपूर्णचंद्रोदृष्टोहरत्याशुसमस्तदोषम् ॥ नयैःस्वकीयैःप्रहरेन्नृक्षितीशोयथातथाजन्मनिदोषजालं ॥ १३ ॥ सौम्यग्रहैर
तिबलैर्विबलैश्चपापैर्लग्नंचसौम्यभवनंशुभदृष्टियुक्तं ॥ सर्वापदोविहरतोभवतिप्रसूतिःपूजापरैरखलुयथापठतैर्ग्रहाणां ॥ १४ ॥ ४९
उदयोगस्त्यमुनेःसप्तर्षीणांमरीचिपूर्वाणां ॥ सर्वारिष्टंनश्यतितमइवसूर्योदयेप्रबले ॥ १५ ॥ अजवृषभकर्किलग्नेरक्षतिराहुः-

समस्तपीडाभ्यः ॥ पृथिवीपतिः प्रसन्नः कृतापराधंयथापुरुषं ॥१६॥ चंद्रः शुभवर्गस्थः क्षीणोपिशुभेक्षितोहरतिरिष्टं ॥ जलमि
वहंत्यतिसारंजातीफलवत्फलंकथितं ॥१७॥ सप्ताष्टमषष्ठस्थाः शशिनः सौम्याहरंतिकष्टफलं ॥ युवतिजनस्यकटाक्षाललिता-
यूनांयथानूनं ॥१८॥ पापराशिगतेचंद्रेतद्दीशेनानिरीक्षिते ॥ सौम्यग्रहाणांवर्गस्थेकृपणेवधनंयथा ॥१९॥ चंद्राधिष्ठितराशीशे
लग्नस्थेशुभवीक्षिते ॥ भृगुणावीक्षितेचंद्रेस्वोच्चेरिष्टंहरेत्तदा ॥२०॥ स्वोच्चस्थेस्वगृहेथवापिसुहृदांवर्गेस्वकीयेपिवा संपूर्णः
शुभवीक्षितः शशधरो वर्गेषुसौम्येषुवा ॥ शत्रूणामवलोकनेनरहितः पापैरयुक्तेक्षितारिष्टंहंतिसदुस्तरंदिनमणिः प्रालेयनाशंय
था ॥२१॥ अध्यायोरिष्टभंगाख्यः प्रोक्तश्चिंतामणौमया ॥ मधुहृत्यागृहीत्वातुव्यंकटेशेनशर्मणा ॥२२॥ ॥ इतिसर्वार्थचिंता
मणौएकादशोऽध्यायः ॥११॥ ॥ अथमृध्यायुः ॥ ॥ द्वात्रिंशदूर्ध्वमर्वाक्तुः सप्तत्यामध्यमायुर्योगान् ॥ तावत्कालनिय-
मितान्योगविशेषानहंवक्ष्ये ॥१॥ चंद्रेकुजर्क्षेतनुगेप्रदृष्टेक्रूरग्रहेः शोभनखेचरेंद्रैः ॥ केंद्राद्बहिष्ठैर्निर्धनंप्रयातिवर्षैस्त्रयस्त्रिंश-
समानकेस्तु ॥२॥ पापग्रहेरंध्रपतौसचंद्रेकेंद्रस्थितेवायदिवात्रिकोणे ॥ निरीक्षितेपापरवेगैर्नभस्थेजातस्त्रयस्त्रिंशदुपैतिवर्षं ३
लग्नेशतौरात्रिकरेणयुक्तेभौमेघटस्थेसुरसंख्यवर्षैः ॥ क्रूरांतरेलग्नगतेतदीशेयुग्मस्थितेदेवगुरोरिपुस्थे ॥४॥ जातस्तुमृत्युमुनि-
वह्निवर्षैः प्रयातिशास्त्रज्ञपरैः प्रदिष्टं ॥ सप्तभूमिजेरंध्रपतौविलग्नेराशौस्थिरेवायदिवाधराजे ॥५॥ रिःफेष्टमेमृत्युमुपैतिजान-

स्त्वब्दाद्विचत्वारिसमानकैर्वा ॥ केंद्रेगुरौकर्मणिसूर्यपुत्रेलग्नेचरेवेदयुगैःसमानैः ॥ ६॥ गुरुशुक्रकोणचकेंद्रस्थौलग्नेशोपापसंयुते ॥ आ
पोक्लिमरथसंख्यायामायुःषट्त्रिंशदेवहि ॥ ७॥ स्वोच्चेविलग्नेक्षितिनंदनेचजीवेस्तगेकर्मणिसूर्यपुत्रे ॥ जातोधनाढ्योबहुशास्त्र
वेत्तावेदाब्धिवर्षैर्निधनंप्रयाति ॥ ८॥ लग्नेश्वरेरंध्रगतेसपापेकेंद्राद्बहिष्ठेयदिसौम्यखेटे ॥ चत्वारिंशद्वत्सरेमृत्युमेतिजातःपुत्रो
नान्यथाशास्त्रमेतत् ॥ ९॥ जन्माधिपेरंध्रगतेसपापेपापान्वितेलग्नपतौरिपुस्थे ॥ बलान्वितेवाशुभदृग्विमुक्तेपंचाब्धिवर्षैर्निधनं
प्रयाति ॥ १०॥ मेषेशशांकेतनुगेस्फुपूर्णेसौम्येक्षितेभूपतिरत्रजातः ॥ पापग्रहाणांचदृशाविहीनेनागाब्धिवर्षैर्निधनंप्रयाति ११
शनैश्चरेलग्नगतःसहायस्त्वन्येनचंद्रोव्ययभेष्टमास्युः ॥ वेदांतविज्ञानसुशीलवृत्तोजानस्तुमृत्युंनयनेषुवर्षे ॥ १२॥ चापेगुरौल
ग्नगतेष्टमस्थेभौमेसराहौमुनिबाणवर्षे ॥ रंध्रेश्वरेकामगतेशशांकेपापान्वितेषण्मृतिगेष्टबाणे ॥ १३॥ सरंध्रगोदेवगुरौविलग्नेकुं
भेसपापेयदिकेंद्रराशौ ॥ सर्वज्ञानांपुण्यवान्शास्त्रवेत्ताजानस्तुषष्ट्यानिधनंप्रयाति ॥ १४॥ केंद्रेसपापेतनुपेव्ययस्थेलग्नेश्वरेरं
ध्रगतेहिवन्हौ ॥ लोकांतरंप्रापयतिस्मजातंकुशीलवृत्तंकुलपांसनंतं ॥ १५॥ सौरोविलग्नेहिबुकेशशांकेकुजेकलत्रेगगनेदिने
शे ॥ कवीज्यसौम्येषिहतेर्युतेषुनरेश्वराजीवतिवर्षषष्ट्या ॥ १६॥ लग्नाधिमानेविबुधारिपूज्येबुधज्यचंद्रैःपरिपश्यमाने ॥ जातं
नरंभूमिपतिंधनाढ्यंकरोतिषष्ट्यास्फुनभेंद्रपूज्ये ॥ १७॥ सितेविलग्नेबुधभास्करात्मजौचतुष्टयस्थाःपरमोच्चखेचराः ॥ नृनी

यलाभर्क्षगतास्तुयोगेमहीपतिःस्यान्निधनंचषष्ट्या ॥१८॥ होराजन्माधिनाथौनिधनमुपगतौमृत्युनाथेचकेंद्रेयोगेजातोनरोऽस्मिन्
जनयतिनपरंकीर्तिवित्तान्वितंच ॥ षष्ट्यार्षड्भिर्युतायांनिधनमभिहितंनंदकोक्तेत्तदिग्भंवर्षैस्त्रिंशेथवास्यास्त्वरिखलभितिखचरे-
जीयतेपार्थिवेंद्रः ॥१९॥ नक्षत्रनाथसहितःसवितानभस्थःसौरिर्विलग्नसहितोहिबुकेस्फरेज्यः ॥ अस्मिन्योगेजायमानोमनुष्यो
क्षोणीपतिर्नैधनमष्टषष्ट्यां ॥२०॥ जीवेविलग्नेबुधसूर्ययुक्तेमीनेशनौद्वादशशीतरश्मौ ॥ जातोयोगेन्नार्थवान्मृत्युभाक्कुब्जी
वेत्षष्ट्याषट्सहायोमनुष्यः ॥२१॥ चंद्रेविलग्नेस्वगृहंप्रयातेनीचेशनौभास्करसप्तमेच ॥ अस्मिन्जातोमानुषोज्ञानिमुख्योजी
वेत्सीष्टःपंचभिःसंप्रयुक्ता ॥२२॥ नीचेमंदेकेंद्रगेवात्रिकोणेसौम्येकेंद्रेभास्करेवासमेसौम्ये ॥ योगेजातःपंडितोधर्मशीलोज्ञा-
नीभाज्ञःसप्ततेर्वत्सराणां ॥२३॥ प्रबलेकेंद्रगेसौम्येनिधनेसौम्यवर्जिते ॥ लग्नाधिपेनदृष्टेश्चेत्ततोपेजीवतिसप्ततिं ॥२४॥ पंचम
स्थेधरासूनौनीचेमंदेस्तगेरवौ ॥ अस्मिन्जातोमनुष्यस्तुसप्तत्यांनिधनंव्रजेत् ॥२५॥ इत्येवंबहुधामयानिगदितायोगास्त्वसं
ख्याइमेयेप्रोक्तायवनादिभिर्मुनिगणैर्निश्चित्ययोगानस्थितान् ॥ ज्ञात्वासम्यगुदाहरंतिमनसातेयांतिकीर्तिपरामेवंप्रश्नविधोसु-
जन्मसमयेवैवाहिकेकर्मणि ॥२६॥ ॥अथदीर्घायुः॥ ॥ दीर्घायुराप्नोतिखगाःसमस्ताःशुभाशुभाःषड्भवनांतरस्थाः
लग्नात्तथैवापरभागयुक्ताःशुभाशुभास्तद्विपरीतमन्यत् ॥२७॥ लग्नादिषट्केशुभखेचरेंद्राःसर्वेबलाढ्यास्त्वपरेतुपापाः ॥ प्रदी

जा॰चि॰ ।मिमंतोगुणवान्स्क़शीलः श्रीमानशीत्यानिधनंप्रयाति २८ लग्नेकेंद्रेशशिसुतेकोणेचंद्रेशुक्रभेशनो ॥ जातस्तुवेदमुनिभिवर्षैःक्रि- अ॰
५१ श्यत्यतःस्करवं ॥२९॥ ओजराशिगताःसर्वेपूर्णचंद्रसमन्विताः ॥ ओजलग्नेपरंभाग्यंदीर्घमायुरुपैतिसः ॥३०॥ समराशिगताः १२
सर्वेकृष्णचंद्रसमन्विताः ॥ स्त्रीणांतुजननंयुग्मलग्नभाग्यमुपैतिसः ॥ ३१॥ भाग्ययोगेषुदीर्घायुर्ददातियवनादयः ॥ तत्पृथक्
पृथगेवाहुर्वराहमिहिरादयः ॥ ३२॥ यत्रतत्रतयोर्योगस्तदिष्टंममसंमतं ॥ कदाचित्कांतयोर्योगः सर्वथानभवेत्तदा ॥ ३३॥-
जीवेसचंद्रेकेंद्रस्थेसौम्यदृष्टेपरेग्रहाः ॥ दशमात्परतोयुक्तास्त्वशीत्यानिधनंभवेत् ॥ ३४॥ चतुष्टयगताःसौम्याः पापाश्चाष्टमव-
र्जिताः ॥ चंद्रोविलग्नात्षष्ठस्थः षडशीत्यायमंव्रजेत् ॥३५॥ पापास्त्रिलाभषष्ठस्थाश्चंद्रः षष्ठाष्टमंगतः ॥ केंद्रेगुरोस्त्रिसाह
स्त्रग्रामनाथाश्चिरायुषः ॥ ३६॥ लग्नत्रिकोणेनिधनायकेंद्रेग्रहास्त्रयः पंचचतुष्टयेवा ॥ जातस्त्रियंप्राप्यजितेंद्रियस्तुजीवेत्स्वय
त्वान्नृपतिःपरेहि ॥ ३७॥ जीवेलग्नेश्वरात्केंद्रेकेंद्रकोणविवर्जिताः ॥ पापाःस्करवानिसत्वात्तुजीवेद्वर्षशतंनरः ॥ ३८ ॥
जीवेलग्नेश्वरात्केंद्रेनयतिःसप्ततिःपरा ॥ केंद्रेगुरोलग्नगतेदिनेशेभूस्तनुयुक्तेयदिवामृतिस्थे ॥ जातः श्रियंप्राप्यगुणाधिकारीश
तंतुजीवेच्छरदांविशेषात् ॥ ३९॥ मीनांत्यलग्नेखचरैश्चतुर्भिः केंद्रस्थितैर्नागशतंसजीवेत् ॥ निशाकरेलग्नगतेस्वभागेमीन- ५१
स्थितेवायदिवाकुलीरे ॥ ४०॥ ग्रहैर्विहीनेखचरैश्चतुर्भिः केंद्रस्थितैर्नागशतंसजीवेत् ॥ सिंहेविलग्नेखचरैश्चतुर्भिस्त्रिकोण-

गेजीवितनतावदेव ॥४१॥ त्रिभिर्ग्रहैः स्वोच्चगतैर्विलग्नेवृषेकुलीरे सगुरौनथैव ॥ मृगेकुजेकर्किणिदेवपूज्ये केंद्रेषु शेषाः परमायु
रत्र ॥४२॥ भृगोचतुर्थे सगुरौ विलग्ने संदोशनौ कर्मणि पापहीने ॥ जातोनरोस्मिन्समुपैतिदीर्घमायुश्र्वविद्यायशसासमेतिं ४३
लग्नेमृगापरार्धेतु पूर्वार्धेभौमसंयुते ॥ लग्नेशशांकसहितेनगुरौकेंद्रेपरंवयः ॥४४॥ नृयुग्मपूर्वार्धगतेभौमेलग्नात्परार्धके ॥ चाप
पूर्वार्धगेजीवेलग्नेत्वपरभागगे ॥४५॥ सौरीकेंद्रेभृगौः पुत्रेसचंद्रेत्वपरंवयः ॥ कन्यापूर्वार्धगेसौम्ये परार्धेलग्नमागते ॥४६॥
ग्रहेस्त्रिभिर्वास्वोच्चस्थैः शतायुरुत्वपरंवयः ॥ पापास्त्रिषष्ठलाभस्थाः सौम्येलग्नात्यभागके ॥४७॥ लग्नेसौरगुरौकेंद्रेभृगौवा
लपरंवयः ॥ नृयुग्मपूर्वार्धगतेधरात्मजेलग्नेपरार्धेसगुरौविशेषात् ॥ केंद्रेछविन्द्वांसहितेत्रजातः शतात्परजीवतिपुण्यभाक्
॥४८॥ अनिमिषपरमांशकेविलग्नेशशितनयेगविपंचवर्गलिभे ॥ भवतिहिपरमायुषः प्रमाणंयदिसहिताः सकलाः स्वतुंगभेषु
॥४९॥ ॥ अथामितायुः ॥ ॥ गुरुशशिसहितेकुलीरलग्ने शशितनये भृगुजेचकेंद्रयाते ॥ भवरिपुसहजोपगैश्र्वशेषैर-
मितमिहायुरनुक्रमाद्विनास्यात् ॥५०॥ लग्नेपटदेवगुरौझषस्थेव्ययेगुरौवासरपाविलग्ने ॥ जातः परंब्रह्मपरंप्रयातिरसायनाद्ये
देवर्धितंतनु ॥५१॥ सिंहेविलग्नेसगुरौभृगौतुकुलीरगेसोमसुतेधनस्थे ॥ पापग्रहैः षट्त्रिदशायगैश्र्वसहस्रवर्षंसमुपैतिजा
तः ॥५२॥ दिनेशभौमाहितुकोविलग्नेमंदान्वितेभोगिपतेोव्ययस्थे ॥ शेषग्रहैर्मृत्युगृहोपपन्नैः सहस्रवर्षद्वयमत्रजातः ॥५३॥

अजेविलग्नेसरवेोस्फुरवस्थे मानेयमे भूमिसुतेकलत्रे ॥ रिःफेशशांके बलपूर्णयुक्ते रसायनाद्यैर्द्विसहस्रमायुः ॥ ५४॥ वृषेशशां-
केनतुंगेविशेषात् समान्वितेचंद्रसजीवशुक्रे ॥ जातस्तुदेवेंद्रपदंप्रयाति शेषग्रहैरर्थसमन्वितैर्वा ॥ ५५॥ जीवेविलग्नेस्वगृहं-
प्रपन्नेशून्येनृयुग्मेभृगुजेतुकेंद्रे ॥ रसायनाद्यैर्बहुवर्षजीवी जातस्तुदेवेंद्रपदंप्रयाति ॥ ५६॥ एकर्क्षगैर्व्योमचरैरशेषैस्त्रिको-
णगैःकेंद्रचतुष्टयस्थैः ॥ जातःशिशुर्नश्यतिजातमात्राज्जीवेद्युगांतंयदिमंत्रसिद्ध्या ॥ ५७॥ त्रिकोणपापैर्निर्मुक्ते केंद्रेसौम्य-
विवर्जिते ॥ निधनेपापरहितेजातस्त्वमरसन्निभः ॥ ५८॥ लग्नेवृषेशुक्रयुतेगुरौतुकेंद्रान्वितेषट्त्रिदशायसंस्थैः ॥ रसाय-
नाद्यैरिहमंत्रसिद्ध्याजातस्तुदेवेंद्रपदंप्रयाति ॥ ५९॥ शनौतुलायांमकरेगुरौचलग्नेकुलीरेवृषभेशशांके ॥ जातःस्फुरन्वौब्रह्म-
पदंप्रयातिप्रसाधनाद्यैरिहमंत्रसिद्ध्या ॥ ६०॥ वर्गोत्तमेलग्नगतेकुलीरे केंद्रेगुरौभूमिसुतेकलत्रे ॥ सिंहासनांशेभृगुजेविशे-
षाद्रसायनाद्यैरमितायुरस्ति ॥ ६१॥ कन्यांत्यलग्नेसबुधेकलत्रेजीवेयदागोपुरभागयुक्ते ॥ मृद्वंशकेवादिननाथपुत्रेजातस्त्वसं-
ख्यायुरुपैतिसूनुः ॥ ६२॥ देवलोकांशकेशुक्रे केंद्रस्थेधरणीसुते ॥ सिंहासनांशकेजीवेकेंद्रेजातस्त्वसंख्यकः ॥ ६३॥ उ-
त्तमांशेभृगौकेंद्रेशनौपारावतांशके ॥ स्वर्गलोकेगुरौकेंद्रेत्वौषधाद्यैरसंख्यकः ॥ ६४॥ गोपुरांशेभृगौकेंद्रेशुक्रेपारावतांशके ॥ ५२
त्रिकोणकर्किलग्नेतुयुगांतंसतुजीवति ॥ ६५॥ चापांशेकर्किलग्नेचतस्मिन्देवेंद्रपूजिते ॥ त्रिचतुर्भिर्ग्रहैःकेंद्रेजातोब्रह्मपदंलभे

न ॥६६॥ तृतीयेकादशेशुक्रे गोपुराद्यंशकान्विते ॥ वृषेवर्गोत्तमेलग्ने ब्रह्मणः परमंपदं ॥ लग्नेशुक्रे गुरौकामेकन्यायामुडुनायके
चापेमेषांशकेलग्ने जातोयातिपरंपदं ॥६८॥ पंचमेबुधसंयुक्ते गोपुराद्यंशकान्विते ॥ गुरौघटेविलग्नेस्मिन्जातोब्रह्मपदंलभेत्
॥६९॥ केंद्रेगुरौलाभगतेर्कपुत्रेधनेरवौमांदियुतेकलत्रे ॥ भाग्येधरासूनुयुतेत्रजातोयुगांतकालंसमुपैतिमंत्रैः ॥७०॥ त्रिको-
णगोजीवबुधौविशेषाल्लग्नेवृषेतत्रयुतेधराजे ॥ निशाकरेगोपुरभागयुक्ते जातःसहस्रद्वयवर्षमेति ॥७१॥ पक्षेसितेजन्मय
दान्हिकालेकेंद्रेगुरौवाशशिभेविलग्ने ॥ दारेकुजेभानुसुतेसुखस्थेजातस्तुजीवेद्युताब्दसंख्यं ॥७२॥ जीवमंदारशुक्रा-
णामन्योन्यंकेंद्रसंभवे ॥ त्रिकोणेवायदायानेजातस्त्वयुतवत्सरः ॥७३॥ शुभैर्युक्तेचतुष्केंद्रेपापैःषट्त्रिभवान्वितैः ॥ सिं-
हलग्नेयदाजातोजीवेल्लक्षयुतानिसः ॥७४॥ ॥अथमुनियोगः॥ ॥ कर्क्यादिस्थेग्रहैःसर्वैर्गुरुचंद्रादिभिर्यदा ॥ शन्य
तःपरमोच्चस्थैर्मुनितुल्योभवेन्नरः ॥७५॥ शन्यादिभौमपर्यंतेलग्नादौखेचराःशुभाः ॥ वैशेषिकांशसंयुक्ताजातास्त्वम
रसन्निभाः ॥७६॥ आकल्पंजीवतिनरोमृगेलग्नेकुजादिकाः ॥ स्वर्क्षगाःखेचराःसर्वेसौम्येजीवेन्हिजन्मनि ॥७७॥ मेषांत्यल
ग्नेसगुरौभृगौवानिशाकरेगोधनुमध्यमांशे ॥ सिंहासनांशेयदिवाधराजेजातस्त्वसंख्याब्दमुपैतिमंत्रैः ॥७८॥ स्थिरेरवौसो-
मसुतेनयुक्तेचंद्रेवृषस्थेमिथुनेचशुक्रे ॥ गुरौकुलीरेयदिवाविलग्नेशनौतुलायांमुनिसाम्यमेति ॥७९॥ देवलोकांशकेचंद्रे —

भौमेपारावतांशके ॥ सिंहासनेरवौलग्नेजातोमुनिसमोभवेत् ॥ ८०॥ मेषलग्नेरवौमानेजीवेस्वोच्चसमन्विते ॥त्रिषडायगतेपापे
जातोमुनिसमोभवेत् ॥ ८१ ॥ चिंतामणौमयाप्रोक्तंसंख्यायुग्मंमनीषिणां ॥ यदुक्तंपूर्वकैःसर्वंतत्तद्दैवमयाधुना ॥ ८२॥ छ॥
॥ ॥ इतिसर्वार्थचिंतामणौद्वादशोऽध्यायः ॥ १२ ॥ छ॥ ॥अथदीप्तादि ॥ ॥ दशानुरोधेनफलंवदंतिमुनीश्वराजान
शुभाशुभंततः ॥ सारंसमुद्धृत्यनदेववक्ष्येभेदंयथाविस्तरतोदशानां ॥ ८३॥ दीप्तःस्वस्थस्तुमुदितःशांतोहीनोतिदुःखितः ॥
विकलश्चखलःकोपीनवधारेवचरोभवेत् ॥ ८४॥ उच्चस्थःखेचरोदीप्तःस्वस्थःस्वक्षेत्रमित्रभे ॥ मुदितोमित्रभेशांतस्त्वपरो
हीनउच्यते ॥ ८५॥ शत्रुभदुःखसंयुक्तोविकलःपापसंयुतः ॥ खलःपराजितोज्ञेयःकोपीस्यादर्कसंयुतः ॥ ८६॥ पृथक्
पृथक्फलंतेषांदशाकालेविशेषतः ॥ नवनामानुरोधेनपरिपाकंवदंतिहि ॥ ८७॥ पाकेप्रदीप्तस्यधराधिपत्यमुत्साहशौर्यंधन
वाहनंच ॥ स्त्रीपुत्रलाभंस्फुरवबंधुपूज्यंक्षितीश्वरान्मानमुपैतिविद्यां ॥ ८८ ॥ स्वस्थस्यखेटस्यदशाविपाकेस्वस्थोनृपाल्ल
ब्धधनादिसौख्यम् ॥ विद्यायशःप्रीतिमहत्वतांचदारार्थभूम्यात्मजधर्ममेति ॥ ८९॥ मुदान्वितस्यापिदशाविपाकेवस्त्रादि
भूगंधस्रुतार्थधैर्यं ॥ पुराणधर्मश्रवणादिगानदानादियानांबरभूषणाप्तिं ॥९०॥ दशाविपाकेस्फुरखधैर्यमेतिशांतस्यभूपु-
त्रकलत्रयानं ॥ विद्याविनोदान्वितधर्मशास्त्रंवक्ष्यर्थदशाधिपपूज्यतांच ॥९१॥ स्थानच्युतिर्बंधुविरोधतांचहीनस्यखेट-

स्यदशाविपाके ॥ जीवत्यसौकुत्सितहीनवृत्त्या त्यक्तोजनैरोगगणपीडितस्स्यात् ॥९२॥ दुःखान्वितस्यापिदशाविपाकेनानाविधं-
दुःखमुपैतिनित्यं ॥ विदेशगोबंधुजनैर्विहीनोचोरादिभूपैर्भयमाभिशस्तः ॥९३॥ वैकल्यखेटस्यदशाविपाकेवैकल्यतांयाति-
तिमनोविकारं ॥ पित्रादिकानांमरणंविशेषात्स्त्रीपुत्रयानांबरचोरपीडां ॥९४॥ दशाविपाकेकलहंवियोगंखलस्यखेट-
स्यपितुर्वियोगं ॥ शत्रुंजनानांधनभूमिनाशमुपैतिनित्यस्वजनैश्चनिंद्यः ॥९५॥ कोपान्वितस्यापिदशाविपाकेपापंसमायातिब-
हुप्रकारैः ॥ विद्यायशःस्त्रीधनभूमिनाशंराज्ञांचवित्तहरणेनरोगी ॥९६॥ ॥इतिदीप्तादि ॥ ॥ अथदशाफलानि ॥
भानोर्दशायांपरमोच्चगस्यभूम्यर्थदारात्मजकीर्तिशौर्यं ॥ संमाननंभूमिपतेःसकाशादुपैतिसंचारविनोदगोष्ठिं ॥ १ ॥ उच्चा-
न्वितस्यापिरवेर्दशायांगोवृद्धिधान्यार्थपरिक्रमंच ॥ संचारसुखंबंधुजनैर्विरोधंदेशाद्विदेशंचरतिप्रकोपात् ॥२॥ प्रचंडवेश्यागम
नंक्षितीशादुपैतिवृत्तिंगजनैकलिमानं ॥ मृदंगभेरीरवयुक्तयानमन्योन्यवैरंलभतेमनुष्यः ॥३॥ आरोहिणीवासरनायकस्यदशा
महत्वंकुरुतेनितसौख्यं ॥ परोपकारंस्कृतदारभूमिगोवाजिमातंगकृषिक्रियादीन् ॥ ४॥ दशावरोहादिननायकस्यकृषिक्रिया
वित्तगृहस्थनाशं ॥चोराग्निपीडांकलहंविरोधंनरेशकोपंकुरुतेविदेशं ॥५॥ नीचस्थितस्यापिरवेर्विपाकेमानार्थनाशंक्षिति-
पालकोपात् ॥ स्वबंधुनाशंस्कृतमित्रदारैःपित्रादिकानामपकीर्तिमेति ॥६॥ अत्यंतनीचान्वितसूर्यदायावपत्तिमाप्नोतिगृह

च्युतिंच ॥ विदेशयानंमरणंगुरूणांस्त्रीपुत्रगोभूमिकृषेर्विनाशं ॥७॥ मूलत्रिकोणस्थरवेर्विपाकेक्षेत्रार्थदारात्मजबंधुसौख्यं ॥
राजाश्रयंगोधनमित्रलाभंस्वस्थानयानादिकमेतिराज्यं ॥ ८॥ स्वक्षेत्रगस्यापिरवेर्दशायांस्वबंधुसौख्यंकृषिवित्तकीर्ति ॥ वि-
द्यायशःप्रार्थितराजपूजांस्वभूमिलाभंसमुपैतिविद्यां ॥९॥ दशाविपाकेत्वधिशत्रुगस्यरवेःप्रनष्टार्थकलत्रपुत्रः ॥ गोमित्र
पित्रादिशरीरकष्टंशत्रुत्वमायातिजनैःसमंतात् ॥१०॥ सपत्नराशिस्थितसूर्यदायेदुःखीपरिभ्रष्टसुतार्थदारः ॥ नृपाग्निचो
रैर्विपदंविवादंपित्रोर्विरोधंचदशांतमेति ॥ ११॥ स्वमित्रराशिस्थितसूर्यदायस्वभृत्यमित्रात्मजराजपूजा ॥ स्वगेहवासंस्वज
नस्यसंगयानादिभूषांबरताम्रलाभं ॥१२॥ अत्यंतमित्रक्षेगतस्यभानोर्दशाविपाकेत्वतिसौख्यमेति ॥ स्त्रीपुत्रधान्यार्थम-
नोविलासतटागयानांबरभूषणानि ॥१३॥ समर्क्षगस्यापिरवेर्दशायांसमंजनेस्यात्कृषिभूमिधान्यं ॥ गोवाजियानांबरदे-
हसौख्यंस्त्रीपुत्रदोषैरणपीडितःस्यात् ॥१४॥ नीचान्वितस्यापिरवेर्दशायांनीचानुवृत्त्याकुनरवीकुशीलः ॥ स्त्रीपुत्रधान्यार्थपशु
क्रियादिमनोविकारंसमुपैतिहेयं ॥१५॥ उच्चान्वितस्यापिरवेर्दशायांमनोविलासंलभतेस्ववृत्त्या ॥ तीर्थाभिषेकंहरिकीर्तनंच-
प्राकारकूपादिपुराणशास्त्रं ॥१६॥ पापान्वितस्यद्युमणेर्विपाकेनित्यंमनःक्लिश्यतिहेयबुद्ध्या ॥ कुभोजनंकुत्सितवस्त्रपानंकु
शीलवृत्त्यात्वधनंकृशत्वं ॥१७॥ दिनाधिनाथस्यशुभान्वितस्यपाकेस्वभूमिधनादिवस्त्रं ॥ इष्टैर्विलासंस्वजनैःसमाजंक

ल्याणवाक्जालविनोदगोष्टिं ॥१८॥ पापेक्षितस्यापिसहस्रभानोर्दशाविपाकेपरमंतुदुःखं ॥ पित्रोर्विनाशंस्कृतदारकष्टंचोराग्निभूपा
लकृतंकृशत्वं ॥१९॥ करोतिभानुःशुभवीक्षितश्चेद्विद्यायशस्त्रीसुतवाग्विलासं ॥ कांतिप्रतापंरतिकेलिसौख्यंपित्रोःसुखंवभू
पतिमाननेच ॥२०॥ केंद्रान्वितस्यापिदिवाकरस्य दशाविपाकेनृपदंडदुःखं ॥ स्थानच्युतिंबंधुवियोगमेतिभंगःकृषेर्वित्तपरि
भ्रमंच ॥२१॥ त्रिकोणसंयुक्तरवेर्विपाके बुद्धिभ्रमंराजविमाननंच ॥ सौख्यादिहानिंनिधनंपितुश्चकर्मादिवैकल्यमुपैतिका-
ले ॥२२॥ उच्चांशकस्यच दशांविदधातिवृत्तिंनित्यंप्रतापजनितांमहतींश्रियंच ॥ नानाविनोदललितंरतिकेलिसौख्यंस्त्रीव-
स्त्रलाभमनिशंपितृवर्गनाशं ॥२३॥ नीचांशयुक्तस्यरवेर्दशायांभार्यार्थभूपुत्रविदेशयानं ॥ त्यक्तोजनैर्बंधुविकुत्सितस्तुमनो-
विकारंज्वरमेहरोगं ॥२४॥ आदौसूर्यदशायांदुःखंपितृरोगकृतक्षयश्चाधिः ॥ मध्येपशुधनहानिश्चांतेविद्यामहत्वंच ॥२५
दशाविपाकेधनहानिमेतिषष्ठस्थभानोरतिदुःखजालं ॥ गुल्मक्षयोद्भूतपवित्ररोगंमूत्रादिकृच्छ्रंत्वथवाप्रमेहं ॥२६॥ रंध्रस्थ-
भानोरपिवादशायांदेहस्यकष्टंत्वथवाभिछिद्रं ॥ चातुर्थिकंनेत्रविकारकासंज्वरातिसारंस्वपदच्युतिंच ॥२७॥ भानोर्द्वाद
शगस्यचेद्यदिदशाक्लेशार्थहानिंकृशंस्त्रीबंध्वात्मजभूमिनाशमथवापित्रोर्विनाशंकलिं ॥ स्थानात्स्थानपरिभ्रमंविषकृतंरा-
ज्ञोभयंपादरुक्विद्यावादविनोदगोष्टिकलहंगोवाजिसंपीडनं ॥२८॥ पुत्रोत्पत्तिविपत्तिमत्रकुरुतेभानोर्धनस्थस्यवाक्लेशंब

धुवियोगदुःखकलहंवाग्दूषणंक्रोधनं ॥ स्त्रीनाशंधननाशनंनृपभयंभूपुत्रयानांबरंसर्वंनाशमुपैतितत्रशुभमशुभंवाच्यंनचैतत्त-
फलं ॥२९॥ भानोर्विक्रमयुक्तस्यदशाधैर्यमहत्सुखं ॥ नृपमाननमर्थाप्तिंभ्रातृवैरंविपत्तथा ॥ ३० ॥ सुखस्थितस्या
पिरवेर्दशायांभोगार्थभूभृत्यकलत्रहानिं ॥ क्षेत्रादिनाशंस्वपदच्युतिंवायानच्युतंचोरविषाग्निशस्त्रैः ॥३१॥ दारान्वित
स्यापिरवेर्दशायांकलत्ररोगंत्वथवामृतिंवा ॥ कुभोजनंकुत्सितपाकजातंक्षीरादिदध्याज्यविहीनमन्नं ॥३२॥ कर्मस्थितस्या
पिरवेर्दशायांराज्यार्थलाभंसमुपैतिधैर्यं ॥ उद्योगसिद्धिंयशसासमेतंजयंविवादेनृपमाननंच ॥३३॥ आयस्थितस्यापिद
शाविपाकेभानोर्धनाप्तिंशुभकर्मलाभं ॥ उद्योगसिद्धिंसुतदारसौख्यंयानादिभूषांबरदेहसौख्यं ॥३४॥ संज्ञाध्याययस्य
यद्द्रव्यमुक्तंकर्माजीवियस्ययच्चोपदिष्टं ॥ भावस्थानालोकयोगोद्भवंचतत्तत्सर्वंतस्ययोज्यंदशायां ॥३५॥ सूर्येस्थानबलाधि
केकृषिधनंगोभूमियानांबरंसौख्यंराजसमाननंपरधनैःसंयुज्यतेकांतिमान् ॥ तत्पाकेशयनांबरादिलभतेसर्वोपकारंमहा-
कीर्तिंभूषणमिष्टबंधुसहितंतीर्थाभिषेकंमहत् ॥३६॥ रवेर्यदास्थानबलेनहीनेतत्पाककालेबलमर्थनाशं ॥ स्थानच्युतिंबं-
धुविरोधनापंदशाद्दिदशासमुपैतिदुःखं ॥३७॥ दिग्वीर्ययुक्तेदिवसेश्वरेतुदिगंतराक्रांतधनादिसौख्यं ॥ तत्तद्दिशःप्राप्त
यशोर्थभूमिनोचेत्तथातादृशमत्रनास्ति ॥३८॥ तत्कालमानात्तनुतेबलिष्ठेरवेर्विपाकेकृषिभूमिवित्तं ॥ उद्योगसिद्धिंनृप

माननंचहीनेरवौकालबलेननाशं ॥३९॥ निसर्गतःसर्वसुपैनिकालरवौतुनेसर्गिकवीर्ययुक्ते ॥ यानार्थभूषांबरदेहसौख्यं
हीनेरवौचौरनृपाग्निभीतिं ॥ ४०॥ रवौतुचेष्टाधिकवीर्ययुक्तेस्वचेष्टनार्थागममानसौख्यं ॥ नृपस्यमानंस्ुतदारसौख्यंहृ
ष्याद्यानांबरमत्रहीने ॥ ४१॥ रवौस्ववर्गानांबलदाष्टयुक्तेख्यातिंतथैवासकलंचसौख्यं ॥ तज्जायतेनतुपरिपाककालेतेने
वहीनेसकलंविनाशं ॥४२॥ क्रूरादिषष्ठ्यंशरवेर्दशायांस्थानच्युतिवानृपचोरभीतिं ॥ कोपाधिकंनत्रशिरोरुजंचपित्रादिना
शंवथवातदीयं ॥४३॥ मृदुंशाषष्ठ्यंशरवेर्दशायांमृद्वंशपानांबरभूषणाप्तिं ॥ नामद्वयंराजसुपूजितंचवेदांतशास्त्रागमधर्म
शास्त्रं ॥ ४४॥ पारावतांशस्थितस्यभानोर्दशाविपाकेमहतींचकीर्तिं ॥ बंधुर्थदशाधिपमाननंचपुत्रादिसन्मित्रकलत्रलाभं
॥ ४५॥ स्वोच्चादिजन्यंफलमाहुरादौपश्चात्फलंरवेचरदृष्टिजन्यं ॥ मध्येफलंस्थानभवंतथैवपापग्रहाणामिहयोजयंति ४६
भुजंगमध्यंशस्थितस्यभानोर्दशाविपाकेहिभयंविषाद्वा ॥ नृपाग्निपातित्यमनेकदुःखंपाशादिमृत्यंशस्थितस्यचैवं ॥ ४७ ॥ –
स्वोच्चस्थोपिदिनेशोनीचांशेचेत्कलत्रधनहानिः ॥ स्वकुलजबंधुविरोधःपित्रादीनांतथैवमुनिवाक्यं ॥४८॥ उच्चांशकस्थितोभा
नुर्नीचस्थोपिमहत्सुखं ॥ करोतिराज्यभारंचदशांतेविपदंकृशां ॥४९॥ ॥इतिरविदशाफलानि ॥ ॥ अथचंद्रद
शाफलानि ॥ ॥ अत्युच्चगस्यापिनिशाकरस्यदशाविपाकेकुसुमांबरंच ॥ महत्वनामतिकलत्रलाभंधनायतिपुत्रम

नोग्विलासं ॥१॥ उच्चस्थितस्यापि निशाकरस्य मासोदशायांकृतदारवित्तं ॥ मिष्टान्नपानांबरभूषणाप्तिं विदेशयानं स्वजने
विरोधं ॥२॥ आरोहिणीचंद्रदशामपन्नास्त्रीपुत्रवित्तांबरसौख्यकीर्तिं ॥ करोति राज्यं सुखभोजनं च देवार्चनं भूसुरतर्पणं च
॥३॥ निशाकरस्याप्यवरोहकाले स्त्रीपुत्रमित्रांबरसौख्यहानिं ॥ मनोविकारं स्वजनैर्विरोधं चोराग्निभूपैः पतनं तटाके ॥ ४ ॥
नीचांशगस्यापि निशाकरस्य मासोदशायां विविधार्थहानिं ॥ कुभोजनं कुत्सितराजसेवां मनोविकारं समुपैति निद्रां ॥ ५ ॥ मू-
लत्रिकोणस्थितचंद्रदाये नृपाद्धनं भूमिसुतार्थदारान् ॥ प्राप्नोति भूषांबरमानलाभं सुखं जनन्यां रतिकेलिलोलं ॥६॥ स्वक्षेत्र
गस्यापि निशाकरस्य नृपाद्धनप्राप्तिमुपैति सौख्यं ॥ प्रचंडवेश्यागमनं क्षितीशात्संमाननं स्त्रीसुतबंधुसौख्यं ॥७॥ निशाकर
स्याप्यतिशत्रुराशिंगतस्य दाये कलहार्थनाशं ॥ कुवस्त्रताकुत्सितभोजनं च क्षेत्रार्थदारात्मजतापयानं ॥ ८॥ यानांबरालंकर
णादिहानिं विदेशयानं परिस्वारकत्वं ॥ देशांतरे भ्राम्यति बंधुहीनो दुःखी परार्थं क्षितिशत्रुदाये ॥ ९॥ मित्रर्क्षगस्यापि निशा
करस्य पाकेर्थलाभं क्षितिपालमैत्रं ॥ उद्योगसिद्धिं जलवस्तुलाभं चित्रांबराभूषणवाग्विलासं ॥ १०॥ सुधाकरस्याप्यतिमि
त्रराशिंगतस्य दाये लभते सौख्यमेति ॥ विद्याविनोदांकितराजपूजां क्षेत्रात्मदारात्मजकामलाभं ॥ ११॥ दशाविपाके समराशि-
गस्य कलानिधेः कांचनभूमिलाभं ॥ किंचित्सुखं बांधवरोगपीडा विदेशयानं लभते मनुष्यः ॥ १२॥ नीचस्थितस्य हि दशा

विपदंमहार्तिक्लेशार्थदुःखवनवाससुपैतिकाले ॥ कारागृहंनिगडपादकृशान्नहीनोचोराग्निभूपतिभयंस्वदारशोषं ॥१३॥ क्षी-
णेंदुपाकेस्वकलाविहीनराज्यार्थभूपुत्रकलत्रमित्रं ॥ उन्मादचित्तंस्वजनैर्विरोधमृणत्वमायातिकुशीलवृत्त्या ॥१४॥ पूर्णेंदुपा-
केपरिपूर्णमेतिविद्याविनोदांकितराजपूजां ॥ स्त्रीपुत्रभृत्यार्थमनोविलासंविशेषतःशोभनकर्मलाभं ॥१५॥ केनापिस्वोच्चस्य
वियच्चरेणयुक्तस्यचंद्रस्यदशाविपाके ॥ मनःप्रसादंमदनाभिरामंस्त्रीपुत्रभृत्यादिविनोदगोष्ठिं ॥१६॥ पापान्वितस्यापिनि-
शाकरस्यपाकेऽग्निचोरक्षितिपालकोपैः ॥ दुःखंस्वनस्त्रीस्वबंधुहानिंविदेशयानंत्वशुभादिकर्म ॥१७॥ चंद्रस्यसौम्यग्र-
हसंयुतस्यप्राप्तोदशायांशुभकर्मलाभं ॥ गोभूहिरण्यांबरभूषणानितीर्थाभिषेकंपरदारसौख्यं ॥१८॥ पापेक्षितस्यापि-
निशाकरस्यदशाविपाकेविफलंसुकर्म ॥ कोपाधिकंकुत्सितभोजनंचमातुर्वियोगंत्वथवानदीयं ॥१९॥ निशाकरस्यापिशुभे-
क्षितस्यपरोपकारंमहतींचकीर्तिं ॥ इष्टार्थबंध्वागमभूपमानंजलक्रियावस्त्रमनोविलासं ॥२०॥ मूलत्रिकोणभेदोर्दशांप्रप-
न्नोनरःसुबहुकोशः ॥ बहुपुत्रवान्विनीतोबंधुविरोधंप्रधानतांयाति ॥२१॥ स्वखस्थितस्यापिनिशाकरस्यमातुर्वियोगंस्व-
खयानभूमिं ॥ कृषेर्धनाप्तिंगृहकर्मलाभंकीर्तिस्वनामांकितपद्यजालं ॥२२॥ दारान्वितस्यापिनिशाकरस्यपाकेकलत्राप्तिसुदा-
हरंति ॥ स्वपुत्रसौख्यंशयनांबरंचप्रमेहमूत्रादिकशंमनोरुक् ॥२३॥ कर्मस्थितस्यापिदशांप्रपन्नाचंद्रस्यकीर्तिंलभतेस्वविद्यां

यज्ञादिकर्माभिमनेकसौख्यंभूपुत्रयानांबरबंधुपूज्यं ॥२४॥ नीचांशगस्यापिदशांददातिरोगंमहत्तरंचेंदोः ॥ पादाक्षिरोग
पीडांयुद्धेषुपराजयंगतोत्साहं ॥२५॥ उच्चांशगस्यापिदशांददातिसौख्यंमहत्तरंचेंदोः ॥ नानाविधधनलाभंभूपतिसन्मा
नंदेहपुष्टिंच ॥२६॥ चंद्रदशायामादौनरपतिसन्मानकीर्तिसौख्यंच ॥ मध्येस्त्रीसुतनाशंगृहधनसौख्यांबरंचांते ॥२७
षष्ठस्यचंद्रस्यदशांप्रपन्नाकरोतिदुःखंकलहंवियोगं ॥ चोराग्निभूपालभयंजलेनमूत्रादिकृच्छ्रंधननाशमाहुः ॥२८॥ रंध्रस्थि
तस्यापिदशांप्रपन्नादेहस्यकार्श्यंजलभीतिदुःखं ॥ विदेशयानंसकलैर्विरोधंकुभोजनंमातृजनेषुनाशं ॥२९॥ रिःफगचं
द्रदशायांसंप्राप्तोभूतिनाशनंकुरुते ॥ राज्ञोनृतधनभाग्यस्थानविनाशंमहत्तरंदुःखं ॥३०॥ चंद्रस्यवित्तस्थितपाककाले
वित्तात्मजस्त्रीसुखभोगभाग्यं ॥ मिष्टान्नपानंरतिकेलिसौख्यंधनागमंपुण्यजलाभिषेकं ॥३१॥ तृतीयराशिस्थनिशाकर
स्यदशामहत्सौख्यमनेकवित्तं ॥ मनोहरंभ्रातृजनादिसौख्यंकृष्यन्नपानांबरभूषणाप्तिं ॥३२॥ लाभस्थितस्यापिनिशाकर
स्यप्राप्तोदशायांविविधार्थलाभं ॥ मृष्टान्नपानांबरकेलिलोलंस्त्रीपुत्रलाभंतुमनोविलासं ॥३३॥ दिनेश्वरस्याहतचंद्रदायप्रा
प्नोतिदुःखंस्वजनैर्विरोधं ॥ भार्याक्षयंभूपनृपाग्निचोरैर्मातुर्वियोगंकृषिधान्यनाशं ॥३४॥ चंद्रेस्थानबलाधिकेधनसुखंकी
र्तिंचविद्यागमंदेवब्राह्मणतर्पणंनृपधनान्याप्नोतिभूमिंधनं ॥ स्त्रीरत्नांबरभूषणंकृषिधनंगोविक्रयंसेवनंमिष्टान्नादिरसायनंफ

लयुतं दध्याज्यमाल्यांबरं ॥३५॥ निशाकरे स्थानबलैर्विहीने स्थानार्थनाशं स्वपदच्युतिंच ॥ स्वबंधुनाशं लयवावियोगं कृषिर्विना
शं स्वमुपैति काले ॥३६॥ निशाकरे दिग्बलसंयुतेस्मिन् दिगंतरादागतवस्तुचित्रं ॥ विद्यागमं भूपतिमित्रतां च स्वबंधुपूज्यं गजवा-
जिभूमिं ॥ ३७॥ चंद्रे तथा कालबलान्वितेस्मिन् तुरंगयानं कृषिगोमहीश्च ॥ विद्यादिघोषं नखकेशदंतचर्मांबरालंकृतवाहनंच
॥३८॥ निसर्गवीर्यान्वितचंद्रदाये निसर्गतश्चापि करोति सौख्यं ॥ अयत्नतो वाहनदेशलाभं नृपालपूज्यं बहुवाहनंच ॥ ३९ ॥
चंद्रे यदा दिग्बलवीर्ययुक्ते कृपाकटाक्षेण नरेश्वरस्य ॥ समस्तभाग्यं समुपैति सौख्यं धनोपकारं च मनोभिलाषं ॥४०॥ क्रूराद्दे
ष्कांशसमन्वितस्य दाये शशांकस्य बहुत्वदुःखं ॥ स्त्रीपुत्रनाशं क्षितिपालकोपं विद्याविवादं कलहं जनेश्च ॥ ४१॥ मृदुद्रेष्कां
शसमन्वितस्य चंद्रस्य दाये बहुपुत्रलाभं ॥ भृत्यार्थलाभं विजयं सुखं च कीर्तिं च विद्यां लभते विशेषात् ॥ ४२॥ पारावतांशस
मन्वितस्य चंद्रस्य दाये महतीं च कीर्तिं ॥ विद्याविनोदं लभते च सौख्यं देवार्चनं पुण्यजलाभिषेकं ॥४३॥ क्रूरद्रेष्काणसंयुक्ते श्वं-
द्रादिशति रोगतां ॥ कार्यपापसमायुक्ते गोब्राह्मणनिपीडनं ॥ ४४॥ आदौ भावफलं प्रोक्तं स्थानजन्यं ततः फलं ॥ अंशोद्भवं फ
लं पश्चाद्ग्रहजातफलं तथा ॥४५॥ ॥ इति चंद्रदशाफलं ॥ ॥ इति सर्वार्थचिंतामणौ त्रयोदशोऽध्यायः समाप्तः ॥१३ ॥
॥ ॥ अथ भौमदशा ॥ ॥ अत्युच्चभूनंदनदायकाले क्षेत्रार्थलाभं समरे जयं च ॥ आधिक्यमन्वेति नरं शमानं सहोदरस्त्रीसु

सौख्यफलदो भूनंदनो राशिनाथो धैर्यं वित्तसुतार्थदारसहजैः संगं नृपात्पूज्यतां ॥ पुत्रस्थानगतस्य पुत्रमरणं बुद्धिभ्रमं जाड्यतां शत्रुक्षे-
त्रगतस्य भूमिसहजैर्दुःखं महारोगभाक् ॥२५॥ पंचमस्थधरासूनोर्दाये कीर्तिर्विवेकता ॥ नेत्ररोगं त्वर्थनाशं दद्यात्कलहमेव वा
॥२६॥ मरणपदस्थो भौमः करोति दुःखमहद्भयं पाके ॥ स्फोटकमन्नविरोधं स्थानविनाशं विदेशयानं च ॥२७॥ नवमस्थधरा
सूनोर्दशापाके पदच्युतिं ॥ गुरूणां च तथा कष्टं तपोविघ्नं महद्भयं ॥२८॥ आयस्थभौमदाये करोति राज्यार्थभूपसन्मानं ॥ स-
मरे जयप्रतापं वा गुपकारं मनोज्ञं कीर्तिं ॥२९॥ व्ययगतभौमदशायां प्राप्नोति धनहानिं नृपाद्भीतिं ॥ स्थानसुतदारनाशं भ्रातृणा-
विदेशवासं च ॥३०॥ उच्चांशसंयुक्तधराजकाले मनोभिलाषं विजयं सुखं च ॥ प्रचंडदासीगमनं नृपस्य प्रधानतां याति सुगंध-
पद्यं ॥३१॥ नीचांशभौमदाये नीचयुतेत्यंतकर्मवैकल्यं ॥ धनहानिभूपदंडः शिश्नोदरपरायणो ऽशीलः ॥३२॥ भौमदशा-
यामादौ लभते विविधार्थमानहानिं च ॥ मध्येभिभूपचौरैर्भीतिं तत्रावानिर्दिशेन्मतिमान् ॥३३॥ अंत्ये भ्रातृवियोगं सुतधन-
दाराग्निगुल्ममूत्रादिं ॥ भौमस्यैवं न भवेद्गोचरयुक्ते विशेषतः कथयेत् ॥३४॥ भौमस्य संस्थानबलान्वितस्य दशाविपाके र्थ-
कलत्रसौख्यं ॥ स्थानादलाभं सुखकीर्तिशौर्यं सुद्योगसिद्धित्वनयादुपैति ॥३५॥ स्थानवीर्यविहीनस्तु कुरुते स्वपदच्युतिं ५९
कुजः कुसीदवृत्त्या च जीवनं भवति ध्रुवं ॥३६॥ दिग्वीर्ययुक्तस्य कुजस्य दाये नृपात्सुलब्धार्थरणप्रतापं ॥ गोभूमिकृष्यं व-

रयानलाभंदिगंतराक्रांतयशःप्रतापं ॥ कालवीर्ययुतभौमदशायांकाम्यलब्धिरतिसौख्यमुपैति ॥ पट्टवस्त्रमणिमौक्तिकलाभंचित्रव-
स्त्रकृषिगोगजलाभं ॥ ३८॥ निसर्गवीर्यान्वितभौमदायेकृपाकटाक्षेणमहीपतीनां ॥ समस्तभाग्यात्मजमित्रबंधुगोभूमिभूषांब
रदेहसौख्यं ॥ ३९॥ निसर्गतस्थानधनाग्निनाशंपित्ताधिकंकुत्सितभोजनंच ॥ कुजस्यदायेकुनरवीपतत्रयःसहोदराणाम-
पिदेहपीडा ॥ ४०॥ चक्रान्वितस्यभौमस्यदशाकालेमहद्भयं ॥ चोराग्निसर्वपीडांचवनवासंपदच्युतिं ॥ ४१॥ दृग्वीर्ययुक्त
स्यकुजस्यदायेकृपाकटाक्षेणमहीपतीनां ॥ समस्तभाग्यात्मजमित्रबंधुगोभूमिभूषांबरदेहसौख्यं ॥ ४२॥ क्रूरषष्ट्यंशसंयु
क्तभौमदायेतिपीडनं ॥ कारागृहप्रवेशंचसमस्तविभवक्षयं ॥ ४३॥ सौम्यषष्ट्यंशसंयुक्तभौमदायेशुभंभवेत् ॥ विवाहदी
क्षायज्ञंचसर्वेषामुपकारकं ॥ ४४॥ पारावतादिसंयुक्तभौमदायेमहत्सुखं ॥ भूम्यर्थदारसंपत्तिधनवाहनभोजनं ॥ ४५॥ क्रू
रद्रेष्काणसंयुक्तकुजदायेमनोव्यथा ॥ निगडंविषभीतिंचपाशबंधनमेवच ॥ ४६॥ उच्चस्थोपिधरासूनुर्नीचांशकसमन्वितः ॥
तत्पाकेभ्रातृमरणंनृपदान्हविषादयं ॥ ४७॥ भूमिपुत्रोपिनीचस्थःस्वोच्चभागसमन्वितः ॥ तत्पाकेभूमिदारार्थपुत्रमित्रादिव
धनं ॥ ४८॥ ॥ इतिकुजदशा ॥ ॥ अथबुधदशा ॥ ॥ अत्युच्चसोमात्मजदायकालेधनान्वितःख्यातिमुपैतिसौख्यं
ज्ञानंचकीर्तिजननायकत्वंस्त्रीपुत्रभूम्यर्थमहोत्सवंच ॥ १॥ उच्चस्थितस्यापिपराशांकसूनोर्दशामहत्कुरुतेर्थसौख्यं ॥ देहस्य

पुष्टिर्धनधान्यपुत्रगोवाजिमत्तेभमृदंगनादं ॥ २॥ आरोहिणीसौम्यदशाप्रपन्नायज्ञोत्सवंगोनृपवाजिसंघं ॥ मृष्टान्नभूषांबरया
नलाभं वाणिज्यभूम्यर्थपरोपकारं ॥३॥ शशांकसूनोस्त्ववरोहिणीयादशामहत्कष्टतरंचदुःखं ॥ विज्ञानहीनंपरदारसंगंनृ
पाग्निचोरैर्भयमत्रकष्टं ॥ ४॥ नीचस्थचंद्रात्मजदायकालेज्ञानेनहीनंस्वजनैर्वियुक्तं ॥ पदच्युतिंबंधुविरोधतांचविदेशयानं
वनवासदुःखं ॥५॥ मूलत्रिकोणान्वितसौम्यदायेराज्यंमहत्सौख्यकरंचकीर्तिं ॥ विद्याविलासंनिगमार्थशीलंपुराणधर्मश्रव
णादिपूतः ॥६॥ स्वक्षेत्रगस्यापिशशांकसूनोः शोभादशायांधनधान्यसंपत् ॥ वाणिज्यगोभूमिसुतार्थदारमृष्टान्नपानांबरभू
षणाप्तिं ॥७॥ शशांकसूनोस्त्वरिराशिगस्यशत्रोर्भयंभूपतिकोपजातं ॥ विद्याविहीनंकुलहीनसेवाकुभोजनंदारसुतार्थनाशं
॥८॥ शशांकसूनोरतिशत्रुराशिंगतस्यपाकेविपदंचदुःखं ॥ उद्योगभंगंस्वजनैर्विरोधंयज्ञादिविघ्नंशुभकर्मनाशं ॥९॥ मित्र-
क्षेत्रदशायांशशांकसूनोर्धनायतिःसौख्यं ॥ नामद्वयसंप्राप्तिःस्वनामांकितगद्यपद्यानि ॥१०॥ अतिमित्रराशिगस्यदशाप्रपन्ना
महत्वतांयाति ॥ भूपतिमैत्रसौख्यंधनसुतदाराश्वबंधुसन्मानं ॥११॥ समर्क्षगस्यापिशशांकसूनोर्दशासुखंधान्यसुतांब-
राणि ॥ करोतिराज्यच्युतिमत्रविघ्नंविज्ञानहीनंपिटकादिरोगं ॥१२॥ नीचखेचरसंयुक्तसौम्यदायेतिकष्टता ॥ पदभ्रमंबं-
धुनाशंकर्मनाशंमनोरुजं ॥१३॥ उच्चखेचरसंयुक्तसौम्यदायेमहत्सुखं ॥ भाग्योन्नतिःसुविद्यांचवाणिज्यंगोकृषिक्रियाः १४

विदःपापान्वितस्यापिदायेपापमुपैतिनच ॥ क्षेत्रार्थदारपुत्रादिकृषिगोभूमिनाशनं ॥१५॥ विदःसौम्ययुतस्यापिपरिपाकेमह-
विदःपापान्वितस्यापिदायेपापमुपैतिनच ॥ क्षेत्रार्थदारपुत्रादिकृषिगोभूमिनाशनं ॥१५॥ विदःसौम्ययुतस्यापिपरिपाकेमहन्नीचकीर्ति ॥वि
त्तसुखं ॥राज्ययोगंसुखंकीर्तिंदारपुत्रनृपात्सुखं ॥१६॥ सौम्येक्षितस्यापिशशांकसूनोर्दशाविपाकेमहन्नीचकीर्ति ॥वि
त्तसुखं ॥राज्ययोगंसुखंकीर्तिंदारपुत्रनृपात्सुखं ॥१६॥ सौम्येक्षितस्यापिशशांकसूनोर्दशाविपाकेमहन्नीचकीर्ति ॥ विदेशया
द्याविलासोद्भवराजपूज्यंकांतिप्रतापंयशसासमेतं ॥१७॥ पापेक्षितस्यापिशशांकसूनोर्धान्यक्षयंबंधुजनैर्वियुक्तं ॥ विदेशया
नस्यपदच्युतिंचप्रेष्यानुवृत्त्याकलहोत्रकृच्छ्रं ॥१८॥ केंद्रोपगस्यहिदशाशशिनंदनस्यभूपालमित्रधनधान्यकलत्रपुत्रान् ॥य
ज्ञादिकर्मनृपमानयशःप्रलब्धिमृष्टान्नपानशयनाबरभूषणानि ॥१९॥ लग्नगतस्यहिदशाशशिनंदनस्यभूपालमानकृषिलब्ध
भाग्यं ॥ भेरीरवादिपरिघोषितयानमार्गंतीर्थाभिषेकमथवाजगतिप्रसिद्धं ॥२०॥ वित्तगसौम्यदशायांविद्याप्राप्तिमहत्त्वकीर्ति
च ॥ भूपतिभाग्यसमानोराजस्थानेप्रधानतांयाति ॥२१॥ तृतीयराशिस्थितचंद्रसूनोर्दशाविपाकेजडतांसमेति ॥ उत्साहान
माजीवनगुल्मरोगमन्नार्तियोगेनृपमाननंच ॥२२॥ शशांकसूनोर्हिबुकस्थितस्यदशाप्रपन्नागृहधान्यनाशं ॥ सौख्यादिहीनं
हिबुकेशमृत्युसुयोगभंगंचपदच्युतिंवा ॥२३॥ पंचमस्थशशिनंदनस्यवाक्रूरबुद्धिरतिकष्टताभवेत् ॥ हीनवृत्तिरपिराजसेवया
कृच्छ्रलब्धधनमेतिसंपदं ॥२४॥ षष्ठाष्टमांत्यस्थितसौम्यदायेत्वग्दोषजातंबहुरोगमेति ॥ विचर्चिकापैत्तिकपांडुरोगंनृपाग्नि
चौरैर्मरणंकृशत्वं ॥२५॥ देहांगवैकल्यकलत्रबंधुविद्वेषणंभूपतिदत्तकोपं ॥ आकस्मिकंमृत्युभयंप्रमादादरिःफस्थितस्यापि

शशांकसूनोः ॥२६॥ दारस्थितस्यापिशशांकसूनोर्दशाविपाकेस्कृतदारवित्तं ॥ विद्याविनोदंविमलांबरंचनामद्वयंभूपतिमित्र-
तांच ॥२७॥ भाग्यस्थितस्यापिशशांकसूनोर्भाग्योत्तरंदारस्कृतार्थलाभं ॥ तीर्थाभिषेकंजपहोमदानंयज्ञादिकर्माणिलभे-
न्मनुष्यः ॥२८॥ कर्मस्थितस्यापिशशांकसूनोर्दशाविपाकेनृपतेोल्यमेति ॥ सौख्यंस्वनामांकितगद्यपद्यंनामद्वयंदारस्कृतार्थ
लाभं ॥२९॥ प्रपूजनंदेवमहीरुहाणांसाम्राज्यलाभंजननायकत्वं ॥ कृषिवलमार्गसमुपेतकाले यज्ञादिदीक्षांस्वजनैर्विशेषा
त् ॥३०॥ उपांत्यराशिस्थितसौम्यदायेत्वनेकधावित्तमुपैतिकाले ॥ दानेनवाभूपतिमाननाद्वाकृषेश्ववाणिज्यविचारतोवा ३१
उच्चांशसंयुक्तशशांकसूनोर्दशाविशेषस्कृतभूषणाभिः ॥ मनोविलासंमदनाभिराममुत्साहधैर्यंचजलाभिषेकं ॥३२॥
नीचांशकसंयुतःसौम्योनीचवृत्त्यानुजीवनं ॥ प्रेष्यत्वंपरिहारंचदशायांचकरोतितत् ॥३३॥ सौम्यदशायामादौलभतेधनधान्यसंप
त्पुरुषः ॥ अंत्येस्वजनविरोधंमध्येदायेनरेशसन्मानं ॥३४॥ अर्कगसौम्यदशायांलभतेविविधापदंमनोदुःखं ॥ स्वकुलज
नृपविरोधंनंदाभयंवाक्षिकर्णरोगंच ॥३५॥ स्थानवीर्ययुतेसौम्येतत्पाकेकीर्तिराज्यदं ॥ मनोधैर्यंमनोत्साहं यज्ञदीक्षाशु
भप्रदं ॥३६॥ तद्वहीनबुधेस्थानदारपुत्रसुहृद्भयं ॥ विदेशवासंदुःखंचनानापरिभवक्रियाः ॥३७॥ दिग्वीर्यसहितेसौम्येदि
गंताद्धनिकःस्पर्धाः ॥ सामंतराजमित्रस्वगंधमाल्यस्वलेपनं ॥३८॥ कालवीर्ययुतसौम्यदशायांदेहसौख्यकलहादिवियो-

गं ॥ दारपुत्रनृपमाननमेतिगांगतोयपरिपूततनुःस्यात् ॥ ३९॥ निसर्गवीर्यान्वितसौम्यदायेनिसर्गतश्चापिशुभादिकर्म ॥ वि
द्याविवादंस्वजनैर्विरोधंमातुर्वियोगंत्वथवानदीयं ॥४०॥ वक्रत्वेष्टान्वितेसौम्येभाग्यदारसुतार्थभाक् ॥ तथापुराणदा-
नादिसमुद्रस्नानमाचरेत् ॥ ४१॥ दृग्बलेनयुतेसौम्येसर्वभूतेषुसौम्यतां ॥ करोतिरतिकेलिंचराज्यभाग्यसमन्वितं ॥ ४२
क्रूरषष्ट्यंशसौम्यस्यदशापाकेमहद्भयं ॥ चोराग्निभूपेभ्यो भीतिःस्याच्छुभदृग्योगवर्जिते ॥ ४३॥ मृदंशादियुतेसौम्येराज्य
लाभंमहत्सुखं ॥ मार्दवंसर्वभूतेषुकृषिपुत्रार्थसंपदं ॥ ४४॥ सौम्येवैशेषिकांशस्थेविशेषाद्राजपूज्यता ॥ स्रग्गंधांबर-
माल्यंचविद्यागोष्ठिरहस्यतां ॥ ४५॥ क्रूरद्रेष्काणसंयुक्तेचंद्रसूनुर्यदातदा ॥ चोराग्निभूपतिभयंस्थाननाशंमहद्भयं ॥ ४६
उच्चराशिगतःसौम्योनीचभागगतोयदि ॥ राज्यसुखंमहत्कीर्तिविनाशंजनितत्क्षणात् ॥ ४७॥ चंद्रात्मजोपिनीचस्थःस्वोच्च
भागसमन्वितः ॥ अशुभंफलमादौतुशुभमंत्येप्रयच्छति ॥ ४८॥ ॥ इतिबुधदशा ॥ ॥ इतिसर्वार्थचिंतामणौचतुर्द
शोऽध्यायः ॥ १४॥ ५॥ ॥ अथगुरुदशा ॥ ॥ गुरोर्दशायांपरमोच्चगस्यराज्यंमहत्सौख्यमुपैतिकीर्तिं ॥ ॥ मनोवि
लासंगजवाजिसंघंनृपाभिषेकंस्वकुलाधिपत्यं ॥ १ ॥ कुलीरगस्यापिसुरेज्यदशायांभाग्यान्तरंभूपतिमाननाढ्यः ॥ विदेशयान-
महदाधिपत्यंदुःखैःपरिक्लिन्नतनुर्मनुष्यः ॥२॥ आरोहणीदेवगुरोर्महत्त्वंदशाप्रपन्नाकुरुतेर्थभूमिं ॥ गानक्रियास्त्रीसुकृत

राजपूज्यंस्ववीर्यतः प्राप्तयशः प्रतापं ॥ ३॥ जीवदशायामारोहिण्यामीशोमंडलादिनाथेवा ॥ द्विजभूपाललब्धधनोमेधावीकां
तिमान्विनीतज्ञः ॥ ४॥ देवेंद्रपूज्यस्यदशावरोहाकरोतिसौख्यंसकृदेवनाशः ॥ सकृद्यशः कांतिविशेषजालंनरेश्वरत्वंसकृदेव
यानि॥ ५॥ अतिनीचभागभाजोगुरोर्दशायांभयंगृहपुंजः ॥ अन्योन्यसुहृदयवैरंकृषिनाशंयानिपरभृत्यः ॥ ६॥ मूलत्रिकोण
निलयस्यगुरोर्दशायांराज्यार्थभूमिसुतदारविशेषसौख्यं ॥ यानाधिरोहणमपिस्वबलाप्तवित्तंयज्ञादिकर्मजनपूजितपादपीठं ७
गुरोर्दशायांस्वगृहंगतस्यराज्ञोर्थभूधान्यसुखांबरंच ॥ मिष्टान्नदोवाजिमनोविलासंकाव्यादिपुण्यागमवेदशास्त्रं ॥ ८॥ गु
रोर्दशायामतिशत्रुराशिगतस्यदुःखंसमुपैतिशोकं ॥ विषादभूम्यर्थकलत्रनाशंनृपाग्निचौरैर्बहुदुःखपीडा ॥ ९॥ गुरोर्दशा
यामरिराशिगस्यक्षेत्रादिविनंशयनांबरंच ॥ नरेशसन्मानसुपैतिनित्यंस्त्रीपुत्रभृत्यात्मसहोदरार्ति ॥ १०॥ प्राप्तोदशांयामतिमि-
त्रराशिंगतस्यजीवस्यनरेंद्रपूज्यं ॥ मृदंगभेरीरवयानघोषंदिगंतराक्रांतसमस्तभाग्यं ॥ ११॥ मित्रर्क्षगस्यापिगुरोर्दशायांन
रेशमैत्रींसमुपैतिकीर्ति ॥ विद्याविवादेजयमन्नसौख्यंस्रग्गंधमृष्टस्वपरोपकार ॥१२॥ समर्क्षगस्यापिगुरोर्दशायांसामान्यतोभू
पतिदत्तभाग्यं ॥ कृष्यर्थगोभूमिमनोविलासंमित्रांबरालंकृतिभूषणानि ॥१३॥ नीचरवेच्चरसंयुक्तजीवदायेमनोरुजं ॥ पर
प्रेष्यापवादंचपुत्राणांचविरोधिना ॥ १४॥ उच्चखेचरसंयुक्तगुरुदायेमहत्सुखं ॥ अनेकगोपुरादीनांनिर्माणंनृपपूज्यता १५

पापान्वितस्यापि गुरोर्दशायां करोति पापं हृदयं नरस्य ॥ गूढं बहिः पुण्यफलं विशेषात् हर्म्यार्थदारात्मजसौख्यमेति ॥ १६॥ शुभपा
न्वितस्यापि गुरोर्दशायां नरेशयानं मृदुलाम्बरं च ॥ दानेन वित्तं नृपमाननाद्वा यज्ञादिसन्मार्गविशेषलाभं ॥१७॥ पापेक्षितस्यापि
गुरोर्दशायां ग्रासं सुखं किंचिदुपैति धैर्यं ॥ क्वचिद्यशः कुत्रचिदाप्तसौख्यं क्वचिद्धनं नाशमुपैति चान्ते ॥ १८॥ शुभेक्षितस्यापि गु
रोर्दशायां देशांतरे वित्तमुपैति भूपात् ॥ देवार्चनं भूसुरतर्पणं च तीर्थाभिषेकं गुरुपूज्यतां च ॥१९॥ केंद्रगतजीवदायराज्यं भूदा
रराजसन्मानं ॥ विविधसुखानंदकरं बहुजनरक्षाप्रधानतां याति ॥ २०॥ लग्नगतस्याहिदशा पुरुषं करोति जीवस्य सौख्यममला
म्बरभूषणाप्तिं ॥ यानाधिरोहणमृदंगपणारवेश्ममत्तेभवाजिभटसंघयुतं करोति ॥२१॥ चतुर्थकेंद्रस्थितजीवदाये यानभयं भू
पतिभिन्नभावं ॥ भूपालयोगे यदि भूपतित्वं नोचेत्तथा तत्सदृशं करोति ॥२२॥ कलत्रराशिस्थितजीवदाये दारार्थपुत्रार्थसुखं प्रया
ति ॥ विदेशयानं समरे जयं च धान्यं परब्रह्मणि पुण्यकर्म ॥ २३॥ कर्मस्थितस्यापि गुरोर्विपाके राज्याभिमाहुर्मुनयस्तदानीं ॥ भूपा
लयोगे त्वथवार्थपुत्रकलत्रसत्कर्मसुराजयोगं ॥ २४॥ पंचमस्थगुरोर्दाये मंत्रोपास्तिर्महत्सुखं ॥ सुताप्तिराजपूजा च वेदांतश्रव
णादिकं ॥२५॥ त्रिकोणसंस्थस्य गुरोर्दशायां स्त्रीपुत्रधान्यार्थविवेकबुद्धिं ॥ मृष्टान्नपानांबरपट्टवस्त्रयानादिलाभं नवमेशसौ-
ख्यं ॥२६॥ उच्चांशसंयुक्तगुरोर्दशायां भाग्योन्नतिं राजसमानमेति ॥ प्रवालमुक्तामणिरत्नलाभं सर्वेषु सख्यं समुपैति सौख्यं २७

नीचांशसंयुक्तगुरोर्विपाके भूपाद्भयं गुल्मविचर्चिकादीन् ॥ स्थानच्युतिं बंधुविरोधतां च नृपाग्निचौरैः स्वकुलोद्भवैश्च ॥ २८ ॥ अर्द्धं-
गजीवदशायां सहसा ज्वरपीडितो भवत्क्षीणः ॥ ऊर्ध्वागरोगगनभोडुः शीलत्वम भग्नसंसारः ॥ २९ ॥ आदौ गुरुदशाकाले नृपपूज्यं
महत्सुखं ॥ मध्ये स्त्रीपुत्रलाभादि चांतेकष्टं विनिर्दिशेत् ॥ ३० ॥ धनस्थितस्यापि गुरोर्विपाके धनाप्तिं भूपतिमाननं च ॥ वि-
द्याविवादांकितराजगोष्ठिं सर्वोपकारं विजयं सुखं च ॥ ३१ ॥ नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं परयुतविजने वा दत्तगो भूमि-
वित्तं ॥ अशनवसनभूषागंधमाल्यांबराणि प्रहृतसुपकारबुद्धिता मानिशौर्यं ॥ ३२ ॥ तृतीयस्थगुरोर्दाये भ्रातृणां च सुखं धनं
नृपदत्तं धनं सौख्यं गंधमाल्यांबरादिकं ३३ नीरोगता पुत्रकलत्रलाभं लभ्यादिपुस्थस्य गुरोर्दशायां ॥ आदौ भवेदेवमथान्त्यपाके
दारार्थचोरादिभयं सरोगं ॥ ३४ ॥ जीवो मरणपदस्थः करोति सौख्यं स्वबंधुजनहानिं ॥ स्थानच्युतिं विदेशं प्रांते स्त्रीराजपुत्र-
सन्मानं ॥ ३५ ॥ लाभगजीवदशायां संप्राप्तो राज्यलाभमुपयाति ॥ बह्वर्थदारपुत्राद्भूपविरोधं स्वबंधुविद्वेष ॥ ३६ ॥ व्ययगतजी-
वदशायां प्राप्तो वाहनादि समुपयाति ॥ लभते विदेशयानं नानाक्लेशैश्च परिभूतः ॥ ३७ ॥ पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थ-
दारात्मजान्संप्राप्नोति गजाश्ववस्त्रकनकचित्रांबरभूषणं ॥ दिग्वीर्यान्वितदेवनायकगुरोर्लोके प्रसिद्धं तथा जीवे कालबलाधि-
के नृपवधूसन्मानितां याति सः ॥ ३८ ॥ निसर्गवीर्यान्वितजीवदाये निसर्गतश्चाति सुखं महत्त्वं ॥ विद्याविलासं रतिकेलिसौख्यं

भागीरथीनोयकृताभिषेकं ॥ ३९॥ वक्रंगतस्यापिगुरोर्दशायांमहार्थनांयातिसुकृतार्थदारान् ॥ युद्धेजयंभूपतिमित्रतांचस्रग्गंध
जातांवरवाग्विलासं ॥ ४०॥ हृग्वीर्ययुक्तस्यगुरोर्विपाके कृपाकटाक्षेणमहीपतीनां ॥ समस्तभाग्यंसमुपैतिनित्यंदेशानरेभाग्य
निकिंचिदेव ॥ ४१॥ क्रूरषष्ट्यंशसंयुक्तगुरोर्दायेतिकष्टता ॥ राजकोपावमानादीन् लभतेनात्रसंशयः ॥ ४२॥ सौम्यषष्ट्यंशा
संयुक्तगुरोर्दायेतिसौख्यता ॥ वाहनबंधुसन्मानंयज्ञवैवाहिकंशुभं ॥ ४३॥ पारावतांशयुक्तस्यगुरोःपाकेमहत्सुखं ॥ मृद्व
न्नपट्टवस्त्रंचहेमविक्रयभूषणं ॥ ४४॥ पाशद्रेष्काणयुक्तस्यगुरोर्दायेचबंधनं ॥ मृद्वन्नपट्टवस्त्रंचहेमविक्रयभूषण ॥ ४५॥
पाशद्रेष्काणयुक्तस्यगुरोर्दायेचबंधनं ॥ कारागृहप्रवेशंचनिगडंदारविग्रहं ॥ ४६॥ उच्चस्थोपिगुरुर्नीचराश्यंशकसमन्वितः ॥
महाभाग्यंतुसंप्राप्तंतत्क्षणादेवनश्यति ॥ ४७॥ नीचस्थोदेवपूज्योपिस्वोच्चांशकसमन्वितः ॥ भाग्यक्षयंतुसंप्राप्तेभाग्यया
नितदानरः ॥ ४८॥ ॥ इतिगुरुदशा ॥ ॥ अथशुक्रदशा ॥ ॥ अत्युच्चभृगुदशायांमत्तविलासाभियार्थभोगीस्या
त् ॥ माल्याच्छादनभोजनशयनस्त्रीपुत्रधनयुक्तः ॥ १॥ स्वोच्चस्थितस्यापिभृगोर्दशायांस्त्रीसंगनष्टार्थविरुद्धधर्मं ॥ पित्रोर्वि-
नाशंसमुपैतिदुःखंशिरोरुजंभूपतिमाननंच ॥ २॥ आरोहिणीशुक्रदशांप्रपन्नाधान्यांबरालंकृतिकांतिपूज्यं ॥ प्रवृत्तिसिद्धिं
स्वजनैर्विरोधंमात्रादिनाशंपरदारसंगं ॥ ३॥ भृगोःसुतस्याप्यवरोहकाले प्रचंडवेश्यागमनंधनाप्तिं ॥ स्त्रीपुत्रबंध्वार्तिमनोविक

रंतहृच्छूलरोगंमदनार्तिमेति ॥ ४ ॥ उद्वेगरोगतस: कर्मस्फाविफलेषुसर्वदाभिरत: ॥ अतिनीचगतस्यदायेशुक्रस्यात्मार्थदारपुत्रार्ति
॥ ५ ॥ मूलत्रिकोणभाजोभृगोर्दशायांमहाधिपत्यंस्यात् ॥ क्रयविक्रयकुशलधनवान्कीर्त्यन्वितोविधिज्ञश्च ॥ ६ ॥ शुक्रक्षेत्रद-
शायांलभतेस्त्रीपुत्रमित्रधनशौर्यं ॥ नित्योत्साहंद्वेषंपरोपकारंमहत्वंच ॥ ७ ॥ भृगोर्दशायामतिशत्रुराशिगतस्यपुत्रार्थकलत्र
हानिं ॥ भ्रमभ्रमसंसारदिशीर्णदेहंगुल्माक्षिरोगंग्रहणीमकोपं ॥ ८ ॥ शत्रुक्षेत्रदशायांभृगोरपत्यार्थदारहानि: स्यात् ॥ भूपति
रोषंकुरुतेमत्तविलासार्थंपापकर्माणि ॥ ९ ॥ मित्रक्षेत्रदशायांपरोपकारीकलाविधिज्ञश्च ॥ पूगारामकृषि: स्यादेवमनुष्यैश्च
रोद्धृतार्थश्च ॥ १० ॥ अतिमित्रशुक्रदायेभूपतिसन्मानसौख्यंच ॥ गोधनवाजिसमेतंगजगतसंघै: समस्तदोषैश्च ॥ ११ ॥
समर्क्षगस्यापिभृगोर्विपाकेप्रमेहगुल्माक्षिगुदनरोग: ॥ किंचित्सुखंभूपतिवह्निचौरै: भयंस्वनामांकितगद्यपद्यं ॥ १२ ॥
नीचरवेच्चरसंयुक्तभृगोर्दायेमहद्भयं ॥ अपवादकृतंदोषंलभतेपापकर्मभि: ॥ १३ ॥ स्वोच्चस्थितेनसहितस्यभृगोर्विपाकेराज्यं-
महत्वसमराधिपतित्वमेव ॥ हेमांबरादिमणिभूषणयानलाभंभेरीमृदंगपणवारववाद्यघोषै: ॥ १४ ॥ पापान्वितस्यापिभृगोर्द-
शायांस्थानच्युतिंबंधुजनैर्विरोधं ॥ आचारहीनंकलहंभियत्वंकृष्यर्थभूम्यात्मजदारनाशं ॥ १५ ॥ शुभान्वितस्यापिभृगोर्द
शायांसौभाग्यमित्रात्मजधान्यलाभं ॥ नरेशपूज्यंगजवाजिसंघंप्रवालमुक्तामणियानलाभं ॥ १६ ॥ पापेक्षितस्यापिभृगो-

दशायांमानार्थहानिंसमुपैतिदुःखं ॥ स्त्रियाविरोधंस्वपदच्युतिंचविदेशवासंनिजकर्महीनं ॥१७॥ शुभेक्षितस्यापिभृगोर्विपा
केधनांबरंभूपतिपूजनंच ॥ जनाधिपत्यंस्वशरीरकांतिकलत्रमित्रात्मजसौख्यमेति ॥१८॥ केंद्रगतस्याहदशाभृगुनंदनस्यया
नांबरादिमणिभूषितदेहकांतिं ॥ राज्यार्थभूमिकृषिवाहनवस्त्रशस्त्रदुर्गाधियानवनवासजलाभिषेकं ॥१९॥ लग्नगशुक्रद-
शायांसंग्रामराजमानंलभते ॥ मणिगोधनकृषिलाभंपरापवादंमहोत्साहं ॥२०॥ चतुर्थराशिस्थितशुक्रदायेराज्यंमहत्सौ
ख्यमुपैतियानं ॥ कृषिक्रियावित्तपशुप्रजानावृद्धिंप्रतापान्वितकीर्तिजालं ॥२१॥ कलत्रराशिस्थितशुक्रदायेकलत्रनाशंत्वथवा
विदेशं ॥ प्रमेहगुल्मादिशरीररोगंप्रभयाविनात्मजबंधुराज्यं ॥२२॥ कर्मस्थशुक्रस्यदशाविपाकेविद्याधनप्राप्तिनरेशपूज्ये ॥ भा-
ग्यात्तरंपालितदेहकांतिंदिगंतरप्राप्तयशःप्रतापं ॥२३॥ त्रिकोणसंयुक्तभृगोर्विपाकेविद्याधनप्राप्तिनरेशपूज्यं प्रवालमुक्ताम-
णिशंखशुक्तिगोभूमियानांबरवस्त्रलाभं ॥२४॥ पंचमस्थभृगोर्दाये पुत्रावाप्तिंविनिर्दिशेत् ॥ कीर्तिंचराजपूज्यंचसर्वेषामुप
कारकं ॥२५॥ त्रिकोणस्थगतःशुक्रः करोतिनृपपूज्यतां ॥ यज्ञकर्मादिलाभंचगुरुर्पित्रोःसुखंयशः ॥२६॥ वित्तगशुक्र-
कदशायांधनहानिमाहुर्धनायतिंचापि ॥ अन्नसुखंवाग्विलासंपरोपकारंनरेशसन्मानं ॥२७॥ तृतीयराशिस्थितशुक्रदायेधै
र्यमनोत्साहमदीनसत्वं ॥ चित्रांबरालंकृतवाहनाप्तिंसहोदराणांबहुभाग्यलाभं ॥२८॥ भृगोर्विपाकेरिगतस्यनाशंधान्यार्थं

वक्त्रात्मजसोदराणां ॥ रोगंमहत्कार्यविनाशनंचशत्रोर्भयंभूपतिवन्हिचौरैः ॥ २९ ॥ रंध्रास्थितस्यापिभृगोर्विपाके शस्त्राग्निचोरक्ष
तामित्रविघ्नं ॥ क्वचित्सुखंकिंचिदुपैतिवित्तंक्वचिन्नरेशाभयशःप्रतापं ॥ ३०॥ लाभस्थितस्यापिभृगोर्विपाके स्त्रगंधमाल्यांबररा-
ज्यपूजां ॥ पुत्रार्थसौख्यंकृषिविक्रयंच दानंस्वनामांकितपद्यजालं ॥३१॥ व्ययगतशुक्रदशायांलभतेधान्यार्थराजसन्मानं ॥स्था
नच्युतिंप्रवासंमातृवियोगंमनोविलासंच ॥ ३२॥ जीवर्क्षगतस्यभृगोः स्त्रीपुत्रमहीनाशनंकुरुते ॥ कर्मस्थानित्योविप्रोजननीक्ले
शान्वितोमनोदुःखी ॥३३॥ अर्कगशुक्रदशायांजीर्णगृहवासःशुभावरोधश्च ॥ लभतेदारविनाशंभ्रातृवियोगंचकलहंच
॥३४॥सिंहगशुक्रदशायांलभतेविविधापदंमनोदुःखं ॥ उद्योगरोगतप्तः कर्मसुविफलेतुसर्वदाभिरतः ॥ ३५॥ शुक्रेस्थान-
बलाधिकेनरपतेःसन्माननंभूषणंविद्यावादविवादगोष्ठिरसिकंनामद्वयंसंभ्रमं ॥ तस्मिन्दिक्प्रबलान्वितेबहुयशःपुत्रार्थदारां
बरंशुक्रेकालबलान्वितेसुखधनंकीर्तिःस्वनामांकिता ॥३६॥ निसर्गवीर्ययुक्तस्यभृगोर्दायेमहत्सुखं ॥ कृषिगोभूमिवित्ता
दिभ्रातृमातृसुखंभवेत् ॥ ३७॥ वक्रगतस्यापिभृगोःसुतस्यदशाविपाकेत्वतिराजपूज्यं ॥ मृदंगभेरीरवयुक्तयानंविचित्रव-
स्त्राभरणानिराज्यं ॥ ३८॥ दृग्वीर्ययुक्तस्यभृगोर्विपाके यज्ञादिकर्माणिकरोतिकाले ॥ विद्याविलासंशयनांबरंचनृपाभिषेकंकल ६५
हंविरोधं ॥३९॥ क्रूरषष्ठ्यंशयुक्तस्यभृगोर्दायेविपद्भयं ॥ चोराग्निराजभीतिःस्यात्कृषिगोभूमिनाशनम् ॥ ४०॥ सौम्यषष्ठ्य-

शयुक्तस्य भृगोर्दाये महत्सुखं ॥ कूपारामतडागानां निर्माणं देवपूजनं ॥४१॥ वैशेषिकांशसंयुक्त भृगोर्दाये महत्सु-
खम् ॥ वाहनं भूपसन्मानं भ्रातृस्त्रीधनसंपदः ॥४२॥ क्रूरद्रेष्काणसंयुक्ते भृगोर्दाये रिपुभीतिदं ॥ कारागृहं महत्कष्ट
मनलंचोरपीडनं ॥४३॥ उच्चक्षेत्रेपि नीचांशयुक्तः शुक्रोऽतिकष्टदः ॥ करोति राज्यनाशंच स्थाननाशं भयापि वा ४४
उच्चांशयुक्तशुक्रोपि नीचराशिसमन्वितः ॥ कृषिगोभूमिवाणिज्यधनधान्यविवर्धनं ॥४५॥ ॥इति शुक्रदशा॥ ॥
॥ ॥अथ शनिदशा ॥ ॥ मंदात्युच्चदशायां ग्रामसभामंडलाधिपत्यं स्यात् ॥ लभतेऽविनोदशीलः पितृनाशं बंधुक-
लहंच ॥१॥ स्वोच्चदशायां कुरुते दशाप्रवेश मनोरुजं दुःखं ॥ वाणिज्यहानि सत्वं कृषिहानिं नृपविरोधंच ॥२॥ आरोहि
णीवासरनाथसूनोर्दशाविपाके नृपलब्धभाग्यं ॥ वाणिज्यलाभं कृषिभूमिलाभं गोवाजियानं स्वतदारलाभं ॥३॥ दिने-
शसूनोस्त्ववरोहकाले राज्यच्युतिं दारसुतार्थनाशं ॥ भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगं ॥४॥ नी
चस्थितस्यापि दिनेशसूनोर्दाये कलत्रात्मजसोदराणां ॥ नाशं महत्कष्टतरां कृषिंच नीचानुवृत्त्या समुपैति वृत्तिं ॥५॥
लाभकोणनिलयस्य शनेर्दशायां देशांतरादिवनवाससमेति काले ॥ ग्रामद्वयं यदि सभानगराधिपत्यं विदूषणं सुतकलत्र

अनादिभिर्वा ॥ ६ ॥ स्वक्षेत्रगस्यचदशादिवसेशसूनोर्हर्षंकरोतिबलपौरुषकीर्तिजालं ॥ राजाश्रयंकनकभूषणभूमिनाम अ.
धेयंस्वनामसदृशानुगुणंचसौख्यं ॥ ७ ॥ शनेर्दशायामतिशत्रुगस्यस्थानच्युतिंबंधुविरोधतांच ॥ चोरादिभूपेभयमत्र १५
विभ्रमोभृत्यार्थदारात्मजकोपमेति ॥ ८ ॥ दिनेशसूनोस्त्वरिराशिगस्यवैश्याद्धनंप्राप्यतिभूमिनाशम् ॥ कृषीविनाशस्त्व
पदच्युतिंचवैरंसमायातिशरीरकृच्छ्रं ॥ ९ ॥ मित्रक्षेत्रदशायामंदस्यतुशिल्पकर्मगुणवेत्ता ॥ ज्ञानबलप्रतापंददातिदुःखक-
हलंच ॥ १० ॥ अधिमित्रमंदद्दायदंदातिसौख्यंनरेशसन्मानं ॥ सुतधनदारविशेषात्पशुकृषिमहिषादिवाणिज्य ॥ ११ ॥
समर्क्षगस्यापिशनेर्दशायासमानबुद्धिःसुतदारमित्रे ॥ भृत्यापदंबंधुजनेषुवैरंदेहस्यकष्टंक्षयवातपित्तैः ॥ १२ ॥ नीचखे
चरसंयुक्तशनेर्दायमहद्भयम् ॥ विभ्रमोपवासश्चनीचवृत्त्यानुजीवनं ॥ १३ ॥ स्वोच्चखेचरसंयुक्तशनेर्दायमहत्सु-
खं ॥ किंचिद्राज्यंकृषेर्लाभंभृत्यवर्गार्थनाशनं ॥ १४ ॥ पापान्वितस्यापिशनेर्दशायांपापानिगूढानिकरोतिकाले ॥ नीचस्त्रि
यासंगमनंविशेषाच्चौरादिनीचैःकलहंविदारं ॥ १५ ॥ शुभान्वितस्यापिशनेर्दशायांविशेषतोज्ञानमुपैतिकाले ॥ परोप- ६६
कारंनृपलब्धभाग्यंकृष्याणिधान्यान्ययसंचलाभं ॥ १६ ॥ पापेक्षितस्यापिशनेर्दशायांभृत्यार्थदारात्मजसोदराणां ॥ नाशास

मायातिपरापवादंकुभोजनंकुत्सितगंधमाल्यं ॥१७॥ शुभेक्षितस्यापिशनेर्दशायांस्त्रीपुत्रभृत्यार्थसुपैतिकाले ॥ पश्चाद्
पैत्यन्नभहत्वकष्टंगोभूमिवाणिज्यकृषेर्विनाशं ॥१८॥ केंद्रान्वितशनेर्दायेकलहायासपीडनं ॥ पुत्रमित्रार्थदारादिबंधूनां-
मरणंध्रुवं ॥१९॥ लग्नगतशनेर्दायेदेहकृच्छ्रसुपैतिच ॥ स्थानच्युतिप्रवासंचराजकोपंशिरोरुजं ॥२०॥ चतुर्थस्थशने
र्दायेमातृतद्वर्गनाशनं ॥ गृहदाहपदभ्रंशंचोरार्तिंनृपपीडनं ॥२१॥ दारराशिगतस्यापिशनेर्दायेऽरिपीडनं ॥ मूत्रकृच्छ्रम-
हाद्वेषंस्त्रीहेतोर्मरणंतुवा ॥२२॥ दशमस्थशनेर्दायेकर्मनाशमुपैतिच ॥ देशांतरंपदभ्रंशंनिगडंराजपीडनं ॥२३॥ द्वि
तीयस्थशनेर्दायेवित्तनाशमथाक्षिरुक् ॥ राजकोपंमनस्तापमन्नशोषंमनोरुजं ॥२४॥ तृतीयस्थशनेर्दायेकृषिगोधन-
संपदः ॥ मनोजाड्यमनोत्साहंभ्रातृतद्वर्गनाशनं ॥२५॥ पंचमस्थशनेर्दायेपुत्रनाशंमनोरुजं ॥ राजकोपंभृत्यनाश
बंधुस्त्रीवित्तविभ्रमं ॥२६॥ षष्ठस्थरविसूनोस्तुदशाकालेऽरिपीडनं ॥ व्याधिचोराग्निविषैर्बाधाग्रहक्षेत्रविनाशनं ॥२७॥ म
रणपदस्थोमंदःकरोतिनित्यंसुतार्थदाराणां ॥ नाशंभृत्यजनानांगोमहिषभूमिदारनाशंच ॥२८॥ नवमगतमंददायेपि-
त्रोर्नाशंगुरोस्तथैवापि ॥ लभतेविदेशयानंस्वकुलजातैर्विनाशमुपयाति ॥२९॥ लाभगमंददशायांलभतेविविधार्थसौ-

ख्यसन्मानम् ॥ कृतदारभृत्यसौख्यंमनोविलासंकृषेश्चलब्धधनम् ॥३०॥ व्ययगतमंददशायांभीतिंचोराग्निभूपसंघेश्च
विविधापदंचदुःखंविदेशयानंस्वबंधुनाशश्च ॥३१॥ अर्कगमंददशायांस्वजनद्वेषंपरस्त्रियंलभते ॥ भृत्यापत्यविरोधंमहो
द्यमंदोषपरिभूतं ॥३२॥ नीचांशमंददायेनीचाचारेणजीवनंलभते ॥ सर्वेषांप्रेष्यत्वंधनकृतदारैश्चविग्रहंदुःखम् ॥३३॥
उच्चांशमंददायेविविधसुखानंदभोगभाग्यादीन् ॥ कुरुतेविदेशयानंग्रामसभामंडलाधिपत्यंवा ॥३४॥ आदौ-
मंददशायामतिदुःखंमातृनाशनंकुरुते ॥ मध्येविदेशयानंपरगृहवासंपरान्नभुक्चांते ॥३५॥ स्थानवीर्य-
युतमंददशायांदारपुत्रधनकीर्तिमुपैति ॥ चोरशत्रुनृपवन्हिभयंवाबंधुनाशमथवाक्षिगुदार्तिम् ॥३६॥ ॥
मंदस्यदिग्वीर्ययुतस्यदायेदिगंतरादासुखार्थकीर्तिम् ॥ भूगूढदारात्मजसोदराणांविनाशनंबंधुजनैर्विरोध-
म् ॥ ॥३७॥ ॥ कालवीर्ययुतमंददशायांकालकूटविषभीतिमुपैति ॥ ॥ दारपुत्रनृपचोरभयंवाधान्यभू-
मिकृषिवाहनलाभम् ॥३८॥ वक्रचारयुतोमंदःकरोतिविफलांक्रियाम् ॥ उद्योगभंगदुःखंचसोदराणां-
चनाशनम् ॥३९॥ क्रूरषष्ठ्यंशसंयुक्तशनिदायेमहद्भयम् ॥ नृपकोपंपदभ्रंशंकारागृहनिवेशनं ॥४०॥ सौम्यषष्ठ्यं

शांसंयुक्तःशनिर्दायेमहत्सुखं ॥ दारपुत्रार्थसंपत्तिंलभतेबंधुविग्रहम् ॥ ४१॥ वैशेषिकांशसंयुक्तः शनिः सौख्यंकरोतिच ॥ विशेषाद्रा
जसन्मानंविचित्रांबरभूषणम् ॥ ४२॥ क्रूरद्रेष्काणसंयुक्तःशनिर्दायेमहद्भयं ॥ उद्बंधनंविषाद्भीतिंनृपचोराग्निजंभयं ॥ ४३॥नी
चराशिगतोमंदः स्वोच्चांशकसमन्वितः ॥ दशादौदुःखमापाद्यदशांतेकष्टदोभवेत् ॥ ४४॥ उच्चराशिगतोमंदोनीचांशकसमन्वि
तः ॥ दशादौसुखमापाद्यदशांतेकष्टदोभवेत् ॥ ४५॥ ॥ इतिसर्वार्थचिंतामणौशनिफलंपंचदशोऽध्यायः ॥ ॥ अथरा
हुदशाफलं ॥ ॥ राहोर्वृषोच्चकेतोस्तुवृश्चिकेतुंगसंज्ञितं ॥ मूलत्रिकोणंकुंभंचकिंर्यामित्रभमुच्यते ॥ १॥ एतत्सप्तमराशि-
स्तुकेतोर्मूलत्रिकोणभं ॥ षष्ठाष्टरिःफगाराहुस्तद्दायेकष्टदोभवेत् ॥ २॥ उच्चस्थःसैंहिकेयस्तुतत्पाकेसुखदोभवेत् ॥राज्यं
करोतिमित्राभिंधनधान्याभिवर्धनं ॥ ३॥ राहुर्नीचस्थितोदायेचोराग्निनृपभीतिदः ॥ उद्बंधनंविषाद्भीतिंकुरुतेसिंहिकासुतः ।
राहोर्दशायाः संप्राप्तौनृपचोराग्निपीडनं ॥ विदेशयानंदुःखानिवनवासाद्भयंध्रुवं ॥ ५॥ लग्नगतराहुर्दायेबुद्धिविहीनंविषाग्निश
स्त्राद्यैः ॥ बंधुविनाशंलभतेदुःखानिचपराजयंसमरे ॥ ६॥ राहोर्दशायांधनराशिगस्यराज्यंचवित्तंहरतेविशेषात् ॥ कुभोजनं
कुत्सितराजसेवामनोविकारंत्वनृतंप्रकोपं ॥ ७॥ तृतीयराशिस्थितराहुकालेपुत्रार्थदारात्मजसोदराणां ॥ सुखंकृषेर्वैधनमाधिप
त्यंविदेशयानंनरपालपूज्यं ॥ ८॥ चतुर्थराशिस्थितराहुकालेमातुर्विनाशंत्वथवातदीयं ॥ क्षेत्रार्थनाशंनृपतेःप्रकोपंभार्यादिपा हिर्यं

नित्यमनेकदुःखं ॥ ९ ॥ चोराग्निबंधार्तिमनोविकारंदारात्मजानामपिरोगपीडा ॥ चतुर्थराशिस्थितराहुकालेभभग्नसंसारकलत्र-
पुत्रं ॥ १० ॥ बुद्धिभ्रमंभोजनसौख्यनाशंविद्याविवादंकलहंचदुःखं ॥ कोपंनरेंद्रस्यकृतस्यनाशंराहोःकृतस्थस्यदशाविपा
के ॥ ११ ॥ दशाविपाकेत्वरिराशिगस्यचोराग्निभूपैर्भयमाप्तनाशं ॥ प्रमेहगुल्मक्षयपित्तरोगंत्वग्दोषरोगंत्वथवामृतिंच ॥ १२
कलत्रराशिस्थितराहुदायेकलत्रनाशंसमुपैतिशीघ्रं ॥ विदेशयानंकृषिभाग्यहानिंसर्पाद्भयंमृत्युकृतार्थनाशं ॥ १३ ॥ राहोर्दशा
यांनिधनस्थितस्ययमालयंयातिकृतार्थनाशं ॥ चोराग्निभूपैःस्वकुलोद्भवैश्चभयंमृगैर्वावनवासदुःखं ॥ १४ ॥ राहोर्दशायांनव
मस्थितस्यपित्रोर्विनाशंलभतेमनुष्यः ॥ विदेशयानंगुरुबंधुनाशंस्नानंसमुद्रस्यकृतार्थनाशं ॥ १५ ॥ मानस्थितस्यापिदशावि
पाकेराहोःप्रवृत्तिंलभतेमनुष्यः ॥ पुराणधर्मश्रवणादिभिश्चगांगेयतोयैरपिशुद्धदेहः ॥ १६ ॥ सौम्यर्क्षगश्चेत्फलमेवमेवपापर्क्षग
श्चेन्नतथाभवेद्धि ॥ प्रोक्तंफलंयत्सकलंनदेवसौम्यर्क्षगश्चेत्फलमन्यथाप्यत् ॥ १७ ॥ पापर्क्षेत्रगतोराहुःकर्मस्थःपापसंयुतः ॥
अभिशस्तस्तदाकालेपुत्रदाराग्निपीडनं ॥ १८ ॥ आयराशिगतोराहुस्तत्पाकेनृपमाननं ॥ धनाप्तिंदारलाभंचगृहक्षेत्रादिसंपदः १९
व्ययगतराहुदशायांदेशभ्रंशंमनोरुजंकुरुते ॥ विच्छिन्नदारपुत्रंकृषिपशुधनधान्यसंपदानाशं ॥ २० ॥ कुलीरगोमेषयुतस्यराहोर्दशा
विपाकेधनलाभमेति ॥ विद्याविनोदंनृपमाननंचकलत्रभृत्यात्मसुखंप्रयाति ॥ २१ ॥ पाथोनमीनाश्वयुतस्यराहोर्दशाविपाकेस्वत-

६८

दारलाभं ॥ देशाधिपत्यंनरवाहनंचदशावसानेसकलंविनाशं ॥२२॥ पापर्क्षसंयुक्तफणींद्ददायेदेहस्यकार्श्यंस्वकुलस्यनाशं ॥ भूपा
द्भयंवंचनतोरिभीतिः प्रमेहकासक्षयमूत्रकृच्छ्रं ॥२३॥ शुभदृष्टियुतोराहुः करोतिसफलंक्रियां ॥ राजमाननमर्थाप्तिंबंधूनांमरणंध्रु
वम् ॥२४॥ पापदृष्टियुतोराहुः कर्मनाशंकरोतिच ॥ उद्योगभंगंदेहार्तिंचोराग्निनृपपीडनं ॥२५॥ उच्चगेहयुतोराहूराज्यलाभंक-
रोतिच ॥ स्त्रीपुत्रधनसंपत्तिवस्त्राभरणलेपनं ॥२६॥ नीचग्रहयुतोराहुर्नीचवृत्त्यानुजीवनं ॥ कुभोजनंकुदारंचकुपुत्रंलभतेन्त-
दा ॥२७॥ दशादौदुःखमाप्नोतिदशामध्येसुखंयशः ॥ दशांतेस्थाननाशंचगुरुपुत्रादिनाशनं ॥२८॥ ॥ इतिराहुदशा ॥ ॥
अथकेतुदशाफलं ॥ ॥ भार्यापुत्रविनाशनंनरपतेर्भ्रांतिर्महत्कष्टताविद्यावंधुधनाप्तिमित्ररहितंरोगाग्निभित्रैर्भयं ॥ यानारोह
णपातनंविषजलैः शस्त्रादिभिर्वाभयंदेशाद्देशविवासनंकलिरुजंविगण्यादिभिर्वाभयं ॥१॥ केतोर्दशायांसंप्राप्तोदारपुत्रविनाश
नं ॥ राजकोपंमनस्तापंचोराग्निकृषिनाशनं ॥२॥ केंद्रस्थस्यदशाकेतोः करोतिविफलंक्रियां ॥ राजार्थकृतदाराणांनाशनंविष
दंतथा ॥३॥ लग्नकेंद्रगतस्यापिकेतोर्दायेमहद्भयं ॥ ज्वरातिसारमेहत्वस्थानकादिविषूचिकाः ॥४॥ धनराशिगतस्यापिकेतोर्दा
येधनक्षयं ॥ वाक्पारुष्यमनोदुःखंकुत्सितान्नमनोरुज ॥५॥ तृतीयराशिगस्यापिकेतोर्दायेमहत्सुखं ॥ मनोवैकल्यमायाति-
स्वानृभिर्द्वेषणंपरं ॥६॥ चतुर्थराशिगस्यापिकेतोर्दायेसुखक्षयं ॥ भ्रमणंदारपुत्रादिगृहेधान्यमहार्घतः ॥७॥ पंचमस्थस्यकेतो

स्तुदशाकालेस्रुतक्षयं ॥ बुद्धिभ्रमंविशेषेणराजकोपंधनक्षयं ॥८॥ केतोस्त्वरिगतस्यापिदशाकालेमहद्भयं ॥ चोराग्निविषभी
तिस्स्याद्दशाधिसमुपेतिच ॥९॥ कलत्रराशिसंयुक्तकेतोर्दायेमहद्भयं ॥ दारपुत्रार्थनाशंचमूत्रकृच्छ्रमनोरुजं ॥१०॥ केतोर
ष्टमयुक्तस्य दशाकालेमहद्भयं ॥ पितृमृत्युश्वासकासग्रहण्यादिक्षयान्वितः ॥११॥ नवमस्थस्यकेतोस्तु दशापाकेपितु
र्विपत् ॥ गुरोर्वाविपदंदुःखंशुभकर्मविनाशनं ॥१२॥ कर्मस्थकेतोःसंप्राप्तोदशायांसुखमेतिच ॥ मानहानिमनोजाड्यम
पकीर्तिमनोरुजं ॥१३॥ लाभस्थकेतोःसंप्राप्तो दायेसौख्यंकरोतिच ॥ भ्रातृवर्गादिसौख्यंच यज्ञदारादिवर्धनं ॥१४॥
रिःफस्थकेतोःसंप्राप्तोदायेकष्टतरंभवेत् ॥ स्थानच्युतिप्रवासंचराजपीडाक्षिनाशनं ॥१५॥ दशादौसुखमाप्नोतिदशामध्येमह
द्भयं ॥ दशांतेराजभीतिश्चदेहजाड्यमथापिवा ॥१६॥ शुभवीक्षणसंयुक्तः केतुःसौख्यंकरोतिच ॥ राज्यार्थगृहशांतिंच
राजपूजांमहादृढं ॥१७॥ पापपक्षिनृयुतोवापिकेतुर्दुःखंकरोतिच ॥ ज्वरातिसारमेहांश्चलग्दोषंराजपीडनं ॥१८॥ ७ ॥
॥इतिकेतुदशा ॥ ॥अथांतर्दशाफलानि ॥ ॥तेजस्विनमतिसुखिनंसुस्थिरंविभवंनृपाच्चलब्धधनं ॥ स्वनवांशक
बलयुक्तः पुरुषंकुर्याद्धनान्वितंख्यातं ॥१॥ शुभदर्शनफलयुक्तः पुरुषंकुर्याद्धनान्वितंख्यातं ॥ सुभगप्रयासममलंसुरू
पदेहसुसौम्यंच ॥२॥ अन्योन्यषष्ठाष्टमदायकालेनृपाद्भयंभृत्यजनैर्विरोधं ॥ स्त्रियाविरोधंसुतदारनाशंचोराग्निबंध्या-

र्तिमनोविकारं ॥३॥ पाकेश्वराद्व्ययगतस्य भुक्तौ स्थानच्युतिं बंधुजनैर्विरोधं ॥ विदेशयानं स्वजनैर्विरोधं पादाक्षिरुग्द्रोगमुपै-
तिकाले ॥४॥ दशाधिपेनापियुतस्य भुक्तौ स्त्रीपुत्रभृत्यार्थकुलेशविनाशं ॥ उद्योगभंगं स्वजनैर्विकष्टमाकस्मिकं दूषण-
मेतिकाले ॥५॥ दशाधिपाद्वित्तगतस्य भुक्तौ मृष्टान्नपानांबरगंधमाल्यं ॥ परोपकारं स्वजनस्य सख्यं स्त्रीपुत्रबंधोत्स-
मनोविलासं ॥६॥ दशाधिपात्सोदरराशिगस्य भुक्तौ नृपाद्वित्तमुपैति सख्यं ॥ स्रग्गंधमाल्यांबरभूषणं च सुखं द्रव-
भोजनसौख्यपुष्टिं ॥७॥ दायेश्वराद्बंधुगतस्य भुक्तौ दारात्मजार्थं गृहधर्मयानं ॥ मिष्टान्नपानांबरभूषणं च शुभग्रहश्चे
त्फलमन्यथान्यत् ॥८॥ पापग्रहोऽपि शुभदः खलु दायनाथाद्बंधुस्थितस्त्वभवनोच्चबलादियुक्तः ॥ सौम्यग्रहोऽप्यशुभदः
स्वराशियुक्तो दायेश्वरात्स्वभवनोच्चबलादिहीनः ॥९॥ दशानाथात्सुतस्थस्य भुक्तौ पुत्राप्तिमादिशेत् ॥ शुभग्रह-
स्य सौख्यं च पापभुक्तौ सुतक्षयं ॥१०॥ अंतर्दशायां पापस्य षष्ठस्थस्य दशेश्वरात् ॥ चोरारिऋणदेहार्तिं लभते पदविभ्र-
मं ॥११॥ तस्मात्षष्ठस्य सौम्यस्य दशेशात्सुखवर्धनम् ॥ लभते पुत्रमित्राप्तिं स्वोच्चमूलादिगस्य तु ॥१२॥ दायेशात्स-
प्तमस्थस्य पापस्यापद्दतो न तथा ॥ दारार्थपुत्रबंधूनां नाशं भूपतितो भयम् ॥१३॥ सप्तमस्थशुभस्यापि दद्यात् सौख्यं दशा-
धिपात् ॥ नीचशत्रुविहीनस्य सद्रत्नांबरभूषणम् ॥१४॥ पाकेशादष्टमस्थस्य पापस्यापद्दतो भयं ॥ निधनं कुत्सितान्नं च

चोराग्निनृपपीडनम् ॥१५॥ पाकेशादष्टमस्थस्य सौम्यस्यापहृतौ सुखम् ॥ भुक्त्यादौ शोभनं प्रोक्तं मंतेकष्टं विनिर्दिशेत् १६ 
ज्यो० दायेशान्नवमस्थस्य पापस्यापहृतौ यथा ॥ अशुभं लभतेकर्म स्थानं भ्रंशं मनोरुजं ॥१७॥ प्रधानतः शुभस्थस्य सौम्य
० स्यापहृतौ यदा ॥ विवाहं यज्ञदीक्षां च दानानि लभते नरः ॥१८॥ कर्मस्थपापखेटस्य हृतौ पाकेश्वराद्यदा ॥ कर्मनाशमवा
प्नोति दुष्कीर्तिं विविधापदं ॥१९॥ तस्मात्कर्मस्थसौम्यस्य हृतौ सौख्यं विनिर्दिशेत् ॥ तटाकगोपुरादीनां पुण्यकर्मादिसं
ग्रहम् ॥२०॥ लाभस्थस्य दशानाथात्पापस्यापहृतौ धनं ॥ लभते पुत्रमित्रार्थस्थानभाक्सिच शाश्वतीं ॥२१॥ पाकेशाल्ल
भयुक्तस्य सौम्यस्यापहृतौ सुखं ॥ भाग्योत्तरं नृपात्प्रीतिं दारपुत्रादिवर्धनं ॥२२॥ व्ययस्थस्य हृतौ दुःखं पापस्य तु दशा
धिपात् ॥ अर्थनाशं नृपात्क्रोधं स्थाननाशं स्मृतिभ्रमं ॥२३॥ पाकेश्वराद्व्ययस्थस्य सौम्यस्यापहृतौ यदा ॥ वाहनं भोग
भाग्यं च वस्त्राभरणभूषणं ॥ २४॥ तत्तद्दशायां संयोज्यमेवमेवं विशेषतः ॥ स्वर्क्षोच्चवर्गमित्रादिविनासर्वत्र कल्पयेत् २५
लग्नार्थसौख्यगस्यापि पापस्यापहृतौ तदा ॥ पाकेशाद्दुःखमाप्नोति सौम्यभुक्तौ शुभं भवेत् ॥२६॥ अंतर्दशायां क्रूरस्य-
क्रूरदायमहद्भयं ॥ स्थानाक्षिबंधुपुत्रार्थदारनाशं नृपाद्भयं ॥२७॥ शुभभुक्तौ शुभदाये स्थानवाहनभूषणम् ॥ सौ-
म्यभुक्तौ पापदाये त्वादौ सौख्यं परं भयं ॥२८॥ सौम्यदाये पापभुक्तौ त्वादौ कष्टं ततः शुभं ॥ शीर्षोदयर्क्षगाः खेटाः स्वादौ स्वां

अपि संवादकार्येषु यथोक्तं फलमादिशेत् ॥ ३० ॥ ॥ इ
तेन्यन्नरक्षगाः ॥ २९ ॥ यत्र संवादबाहुल्यं योजयित्वा फलं वदेत् ॥ अपि संवादकार्येषु यथोक्तं फलमादिशेत् ॥ ३० ॥ ॥ लग्नग-
तिसाम्रुदायिकांतर्दशाफलम् ॥ ॥ अथ ग्रहाणां लग्नादिस्थितभेदेन पुनरप्यंतर्दशाफलविशेषमाह ॥ ॥ लग्नग-
स्यरवेः पाके भौमार्किशिखिभोगिनां ॥ अंतर्दशायां दुःखं च राज्यार्थगृहनाशनं ॥ १ ॥ तेषामगोचरस्थानां दिनेशात् फल-
मीदृशं ॥ गोचरस्थे फलं सौख्यं सर्वस्मिन् पाकपाहृहे ॥ २ ॥ गोचरत्वं नाम ॥ स्वर्क्षतुंगत्रिकोणस्थः षडष्टांत्यविवर्जितः ॥
अनस्तगोमित्रगस्तु गोचरस्थो भवेद्ग्रहः ॥ ३ ॥ अस्तगो नीचगो वापि स्वर्क्षमूलविवर्जितः ॥ षष्ठाष्टमव्ययस्थो वा यः खेटोय-
मगोचरः ॥ ४ ॥ लग्नस्थवासरेशस्य दशायामीज्यशुक्रयोः ॥ शशांकसौम्ययोर्भुक्तौ कृषिगोसुतदारभूः ॥ ५ ॥ धनस्थवासरे
शस्य पापभुक्तौ धनक्षयं ॥ वाक्पारुष्यमनोदुःखं नेत्ररोगं महद्भयं ॥ ६ ॥ सौम्यभुक्तौ रवेः पाके धनस्थस्य महत्सुखं ॥ वि
द्यालाभं नृपात्प्रीतिवस्त्रवाहनभूषणं ७ तृतीयस्थस्य तु रवेः पाके पापखेटो यदा ॥ गोचरस्थं महत्सौख्यं नो चेत् पापफलं वदेत्
॥ ८ ॥ नवस्थभानुपाके च शुभभुक्तौ महत्सुखम् ॥ धैर्यं भ्रातृसुताभिन्नसमरे जयमाप्नुयात् ॥ ९ ॥ दिनेशस्य सुखस्थ
स्यदशायां पापिनां हृतौ ॥ मातृनाशमनोदुःखं चोराग्निनृपपीडनं ॥ १० ॥ रवेः सुखस्थस्यापि शुभभुक्तौ महत्सुखं ॥ रा
ज्यार्थपुत्रदारादिवस्त्रमाल्यानुलेपनं ॥ ११ ॥ पंचमस्थरवेः पाके भौमार्कशिखिभोगिनां ॥ अंतर्दशायां पुत्रार्तिचौरभूपाग्निपी

र्वि· डनम् ॥ १२॥ शुभग्रहाणां भुक्तौ च रवेः पंचमगस्य तु ॥ परिपाके सुताप्तिं च राज्यं वाहनं भूषणं ॥ १३॥ षष्ठस्थस्सूर्यदाये स्मि- अ·
२१ न्नपहारे तु पापिनाम् ॥ ऋणं चोराग्निभूपेभ्यस्तु भीतिरावश्यकी तथा ॥ १४॥ सौम्यनामपहारे तु भास्करस्यारिगस्य च ॥ परि १६
पाके सुखं पूर्वं पश्चाद्दुःखं विनिर्दिशेत् ॥ १५॥ सप्तमस्थरवेः पाके शुक्रेज्याज्ञविदां ततो ॥ दारलाभं मनोत्साहं यानाम्बरविभू
षणं ॥ १६॥ तथाविधरवेः पाके दुःखं स्यात्पापिनां ततो ॥ ज्वरातिसारपित्तं च मेहकृच्छ्रारिपीडनम् ॥ १७॥ अष्टमस्थरवेः
पाके शुभे भुक्तौ शुभं वदेत् ॥ किंचिद्दुःखं शुभाधिक्यं शयनाम्बरभूषणं ॥ १८॥ तथाविधरवेर्दाये पापभुक्तौ महद्भयं ॥ मर
णं व्याधिपीडा वा परप्रेष्यत्वमेव वा ॥ १९॥ शुभस्थानगतस्यापि रवेः पाके ततो यदा ॥ सौम्यानां शुभकर्माप्तिं दानयज्ञं महो-
त्सवं ॥ २०॥ नवमस्थरवेः पाके पापभुक्तौ यदा तदा ॥ करोति दुःखबाहुल्यं गुरुं पित्रादिनाशनं ॥ २१॥ कर्मस्थरविदाये तु-
पापभुक्तिर्यदा तदा ॥ करोति कर्मकोशार्तिं चोराग्निनृपपीडनं ॥ २२॥ तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ करोति विपु-
लं राज्यं कीर्तिश्चाचन्द्रतारके ॥ २३॥ लाभराशिगतस्यापि रवेः पाके शुभेतरा ॥ भुक्तिर्यदा तदा दुःखं पश्चात्सौख्यं करोति च ॥
॥ २४॥ तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ धनाप्तिं राजसन्मानं दारपुत्रनृपात्तभियं ॥ २५॥ द्वादशस्थरवेः पाके पापभुक्तौ ७१
महद्भयं ॥ स्थानच्युतिं प्रवासं च नृपकोपाद्विमानना ॥ २६॥ तथाविधरवेः पाके शुभभुक्तौ महत्सुखं ॥ गोभूमिवस्त्रधा

न्यादिमणिविद्रुमभूषणम् ॥२७॥ ॥इतिरविपाकांतर्दशाफलम् ॥ अथचंद्रदशायामंतर्दशामाह ॥ ॥मूर्तिस्थचं-
द्रदायेतुशुभेज्याज्ञविदांहृतेतो ॥ देहारोग्यंनृपात्प्रीतिंवाहनांबरभूषणं ॥१॥ तथाविधस्यचांगस्यपरिपाकेशुभेनरा
त्हतिःकरोतिदुःखंचकृषिगोभूमिनाशनं ॥२॥ द्वितीयस्थानशानाथपरिपाकेशुभेनरा ॥ कलत्रपुत्रबंधूनांनृपात्प्रीतिं
करोतिच ॥३॥ सौम्यात्हतोद्वितीयस्थचंद्रदायेमहत्सुखं ॥ भोजनांबरपानंचमनोत्साहंकरोतिहि ॥४॥ तृतीयस्थानि
शानाथपरिपाकेमहत्सुखं ॥ शुभग्रहाणांभक्तिस्तुकरोतिनृपमानतां ॥५॥ तथाविधनिशानाथपरिपाकेशुभेनरा ॥
त्हतिःकरोतिवैकल्यंस्थानात्धैर्यविनाशनं ॥६॥ चतुर्थस्थानिशानाथपरिपाकेमहत्सुखं ॥ शुभसंयुक्तोनृपात्प्रीतिर्जायते-
विविधसुखं ॥७॥ पापयुक्तोमहत्कष्टंगृहदारार्थनाशनं ॥ चोराग्निनृपभीतिंचतादृगंगदशांतरे ॥८॥ पंचमस्थानिशाना
थपरिपाकेमहत्सुखं ॥ सौम्ययुक्तोकलत्रार्थपुत्रमित्रांबराणिच ॥९॥ तथाविधदशानाथदायेपापल्हतोयदा ॥ बुद्धिक्लो-
भंमनस्तापपुत्रदारनृपाद्भयं ॥१०॥ कृषिनाशमृणग्रस्तषष्ठस्थितनिशाकरात् ॥ स्यात्पापिनात्हतोदुःखममहक्षयपांडु
भिः ॥११॥ रिपुस्थितदशानाथात्सौम्यानांतुयदात्हतिः ॥ करोतिसर्वतोमैत्रींचोराग्निभयनाशनं ॥१२॥ कलत्रस्थानशा-
नाथात्यदासौम्यात्हतिस्तदा ॥ कलत्रपुत्रसंपत्तिर्वाहनांबरभूषणं ॥१३॥ तथाविधदशानाथात्पापिनांतुहतिर्यदा ॥

विदेशयानंपुत्रार्थदारबंधुविनाशनं ॥१४॥ अष्टमस्थनिशानाथानृपापभुक्तौमहद्भयं ॥ मरणंदारपुत्राणांकुत्सितान्नंपरा-
जयं ॥१५॥ रंध्रस्थितनिशानाथपरिपाकेमहत्सुखं ॥ सौम्यभुक्तौमहाकीर्तिर्धैर्यवाहनभूषण ॥१६॥ धर्मस्थित
दशानाथाच्छुभभुक्तौपितुःसुखं ॥ धर्मयज्ञविवाहंचराज्यस्त्रीधनसंपदः ॥१७॥ तथाविधदशानाथात्पापिनांतुल्हनिर्य
दा ॥ धर्महानिर्मनोदुःखंराज्यार्थगृहनाशनं ॥१८॥ कर्मस्थचंद्रदायेचसौम्यभुक्तिःकरोतिहि ॥ स्वकर्मनिरतंशास्त्र
धर्मदायपरायणं ॥१९॥ कर्मस्थितनिशानाथात्पापभुक्तिर्यदातदा ॥ कर्मनाशंकरोत्यत्रअपकीर्तिमहद्भयं ॥ २० ॥
लाभचंद्रदशाभुक्तिर्धनधान्यांबराणिच ॥ वाहनंराज्यलाभंचकरोतिविविधंसुखं ॥२१॥ लाभचंद्रेपापभुक्तौधननाशसु
पीतिच ॥ कृषिधान्याक्षिदेहार्तिनृपचोरादिपीडनं ॥२२॥ द्वादशस्थनिशानाथपरिपाकेर्थनाशनं ॥ पापभुक्तौमहत्कष्ट
सर्वशत्रुत्वमेवच ॥२३॥ शुभभुक्तौव्ययस्थस्यवस्त्रमाल्यविभूषणं ॥ दारार्थपुत्रमित्राणांवर्धनंवाहनंसुखं ॥२४॥ इ
तिचंद्रदशायामंतर्दशाफलं ॥ ॥लग्नस्थितधरासूनोःपरिपाकेव्रणंक्षतं ॥ पापभुक्तौमहत्कष्टमजीर्णादिमहद्भयं
॥ १ ॥ शुभभुक्तौनृपात्प्रीतिंभ्रातृवर्गशुभंसुखं ॥ तथाविधधरासूनोर्दशायांक्षेत्रवाहनं ॥ २ ॥ धनस्थितधरा-
सूनोःशुभभुक्तिर्यदातदा ॥ भ्रातृसौख्यमनोत्साहंविद्यावाहनभूषण ॥३॥ द्वितीयस्थधरासूनोःपरिपाकेशुभा-

र्तिः ॥ पूर्ववित्तविनाशंचराजकोपंज्वराग्निभिः ॥४॥ तृतीयस्थधरासूनोः पापभुक्तिर्यदानदा ॥ मनोवैकल्यमाप्नोति भ्रा-
तृवर्गविनाशनं ॥५॥ हिबुकस्थधरासूनोः पाकेसौम्यद्दतिर्यदा ॥ भोजनांबरसौख्यंचकृषिभूषणवाहनं ॥६॥ हिबु
कस्थधरासूनोः क्रूरभुक्तौमहद्भयं ॥ गृहक्षेत्रविनाशंचनृपचोराग्निपीडनं ॥७॥ हिबुकस्थधरासूनोः पाकेसौम्यद्दति-
र्यदा ॥ क्षेत्रांबरसुखावाप्तिपशुवाहनभूषणं ॥८॥ पंचमस्थधरासूनोः पाकेपापद्दतिर्यदा ॥ कृषिगोधनधान्यार्थ—
सुतदारविनाशनं ॥९॥ तथाविधकुजात्सौम्यभुक्तौशोभनमादिशेत् ॥ राजपूज्यसुताप्तिंचमंत्रावाप्तिमहादिशेत् १०
षष्ठस्थितकुजात्पापभुक्तौकष्टंविनिर्दिशेत् ॥ चोराग्निनृपपीडांच स्फोटकक्षयमेहनं ॥११॥ तथाविधकुजात्सौम्यभुक्तौ
भूपालमित्रतां ॥ बंधुनाशंमनोदुःखंपश्चात्सौख्यंविनिर्दिशेत् ॥१२॥ कलत्रस्थकुजात्पापभुक्तौस्त्रीसुतराजभीः
शुभभुक्तौमहत्सौख्यंनृपवाहनभूषणं ॥१३॥ अष्टमस्थकुजाद्भुक्तौपापिनांमरणंकृशं ॥ सौम्यभुक्तौमहत्सौख्यं कृ-
षिगोनृपपूजनं ॥१४॥ नवमस्थधरासूनोर्दायेपापद्दतिर्यदा ॥ पित्रोर्नाशंगुरोर्नाशंधर्महानिमनोरुज ॥१५॥ तथाविधकु-
जात्सौम्यभुक्तिर्गोधनसंपदः ॥ विवाहयज्ञदीक्षांचदेवभूसुरतर्पणं ॥१६॥ कर्मस्थितधरासूनोर्दुःखंस्यात्पापिनांद्दतौ
विदेशयानंदुष्कीर्तिलभतेहिपराजयं ॥१७॥ लाभस्थभूमिपुत्रस्यपाकेपापद्दतिर्यदा ॥ करोतिविपुलराज्यंगंधमाल्य

विभूषणं ॥ १८ ॥ शुक्रेज्याज्ञविदांभुक्तौलाभराशिगतस्यतु ॥ परिपाकेमहत्सौख्यंदानधर्मादिसंग्रहम् ॥ १९ ॥ द्वादशस्थ
धरासूनोः पाकेपापत्द्दतिर्यदा ॥ करोतिदुःखबाहुल्यंकारागृहनिवेशनं ॥ २० ॥ शुभापहारेसौख्यंचयानांबरविभूषणं
भुक्त्यंतेराजकोपंचपदभ्रंशमनोरुजं ॥ २१ ॥ इतिकुजांतर्दशा ॥ ॥ अथराहुदशायामंतर्दशाफलं ॥ ॥ ल
ग्नस्थेसैंहिकेयस्यदायेपापत्द्दतिर्यदा ॥ करोतिदुःखबाहुल्यंनृपचोराग्निपीडनं ॥ १ ॥ नवस्थभोगिनः पाकेशुभभुक्तौसुखंव
देत् ॥ गृहक्षेत्रादिवृद्धिश्चभोजनांबरभूषणं ॥ २ ॥ षडष्टांत्यगतस्याहेः परिपाकेशुभेनरा ॥ द्दतिःकलहरोगाग्निनृपचो
रविषारिभीः ॥ ३ ॥ श्वासक्षयप्रमेहादिशूलनिद्रादिभाग्भवेत् ॥ कुभोजनंकुवस्त्रंचस्थाननाशंनृपाद्भयं ॥ ४ ॥ दुस्थस्य
चाहिनाथस्यपरिपाकेशुभात्द्दतिः ॥ आदौशुभंमहत्सौख्यंनृपमानंधनागमं ॥ ५ ॥ अंतेतुराजभीतिःस्यात्स्थानभ्रंशम
नोरुजं ॥ कृषिगोभूमिवस्त्रादिबंधुपुत्रार्थनाशनं ॥ ६ ॥ केंद्रत्रयस्थितस्याहेः पापिनांतुत्द्दतिर्यदा ॥ गृहदाहाक्षिरोगादि
दारपुत्रमहद्भयं ॥ ७ ॥ स्थानच्युतिमनोदुःखंनिजाचारविवर्जितं ॥ अकस्मात्कलहंचैवचोराग्निनृपपीडनं ॥ ८ ॥ चतुष्ट
यगतस्याहेः परिपाकेशुभात्द्दतिः ॥ क्वचित्सौख्यंक्वचित्कीर्तिंक्वचिद्दुर्मंक्वचित्सुखं ॥ ९ ॥ एवमादौतुभुक्त्यंतेराजकोपाद्ध
नक्षयं ॥ युद्धेपराजयंचैवविद्यावादेमहद्भयं ॥ १० ॥ त्रिकोणस्थफणींद्रस्यदशापाकेमहत्कुशं ॥ पापभुक्तौमहत्कष्टंपापा

चारसमन्वितं ॥११॥ अपकीर्तिंकुभोज्यंचकृषिगोभूमिनाशनं ॥ नृपभीतिंचचौर्यंचमौल्यादपतनंभवेत् ॥१२॥ तथाविध
फणींद्रस्यशुभभुक्तौशुभक्रिया ॥ सुतदारधनाप्तिंचभुक्त्यंतेफलमीदृशं ॥१३॥ किंचित्सुखंतदादौतुविदेशगमनंतथा ॥
मंत्रोपास्तिमनोत्साहंकलत्रात्मजदूषणम् ॥१४॥ तृतीयलाभगस्याहेः परिपाकेमहत्सुखं ॥ पापभुक्तौनृपप्रीतिंफलमीदृ
शमादिनः ॥१५॥ अंतेकष्टंविनिर्दिष्टंचोराग्निनृपपीडनं ॥ बंधुद्वेषमनोदुःखंभ्रातृवर्गविनाशनं ॥१६॥ धनराशिगत-
स्याहेः पापानांतुदृतिर्यदा ॥ धननाशमनोदुःखंभार्यापुत्रविनाशनं ॥१७॥ क्रयविक्रयविच्छाप्तिंवाग्दूषणमथापिवा ॥ तथा-
विधफणींद्रस्यशुभभुक्तौतुभोजनं ॥१८॥ वस्त्रवाहनभूषाप्तिंक्रयविक्रयदूषणं ॥ उद्योगभंगौदेहार्तिंगूढपापंलभेन्न
रः ॥१९॥ ॥ इतिराहुंतर्दशा ॥ ॥ अथजीवांतर्दशा ॥ ॥ केंद्रस्थितस्यजीवस्यदशायांपापिनांदृतौ ॥ दे
हार्तिंलभतेदुःखंराजकोपंधनक्षयं ॥१॥ कृषिगोभूमिनाशंचविरोधंबंधुभिःसह ॥ उत्साहभंगवैकल्यमादौचांतेशुभंव
देत् ॥ भुक्तौशुभानांतत्कालेगुरोःकेंद्रगतस्यतु ॥ राज्यलाभमनोत्साहंवस्त्रवाहनभूषणं ॥३॥ दानंहोमंजपंधर्मंनृपला-
लनमाननं ॥ सर्वोपकारकल्याणविचित्रांबरकांचनं ॥४॥ त्रिकोणस्थगुरोःपाकेशुभभुक्तौमहत्सुखं ॥ प्राकारगोपुरा-
दीनांनिर्माणंदेवतर्पणं ॥५॥ भाग्योत्तरंमहाकीर्तिंदारपुत्रार्थसंग्रहं ॥ विदेशयानादामाप्तिंयशोविद्याजयंसुखम् ॥६॥ त

त्रस्थितस्यगुरोः पाके पापिनांवह्नितिर्यदा ॥ दारपुत्रनृपक्रोधं बंधूनांमरणंतथा ॥७॥ बुद्धिभ्रंशं पदभ्रंशं कार्यविघ्नकरंतथा ॥ चोरा
ग्निदाहपीडांच कुरुतेनात्रसंशयः ॥८॥ स्वकुलाचारहीनंच परदाराभिमर्शनं ॥ चंचलंमानहानिंच मणिविद्रुमनाशनं ॥९॥ ष
ष्ठाष्टमेव्ययस्थस्य गुरोः पाकेशुभेनरा ॥ कुर्वन्तिस्वकुलाचारहीनंराज्यार्थनाशनं ॥१०॥ आत्मार्थबंधुमरणं विदेशान्नृपला
यनं ॥ भूविवादंमनोदुःखं व्याधिनाभयमेवच ॥११॥ गुरोर्नाशगतस्यापि परिपाकेमहत्सुखं ॥ देशग्रामाधिपत्यंच शुभ-
भुक्तोमहद्यशः ॥१२॥ देहारोग्यकरंकिंचिद्गजाश्वाद्यंबराणिच ॥ सुभोजनंसुखोल्लासं क्षीरदध्याज्यशर्कराः ॥१३॥
तृतीयायगतस्यापि गुरोः पाकेमहद्यशः ॥ सौम्यानांभुक्तिकालेतु वस्त्रवाहनभूषणं ॥१४॥ मणिविद्रुममुक्तादि कांचना-
द्यंबराणिच ॥ देशाधिपत्यंमंत्रित्वंलभतेनात्रसंशयः ॥१५॥ तादृशस्यगुरोर्दाये पापभुक्तौमहद्भयं ॥ आचारहीनंकुरुते
स्वकुलोद्भवनाशनं ॥१६॥ विदेशवासकश्चैव नानादुःखपरिभ्रमं ॥ एवमादौदशांतेतु सुखवाहनभोजनं ॥१७॥ ध
र्मस्थितगुरोर्दाये शुभभुक्तौधनागमं ॥ विद्यालाभंजयसौख्यं दारपुत्रनृपात्सुखं ॥१८॥ सर्वेषामुपकर्तृत्वं धनाधिक्यंमह
त्प्रियं ॥ भोजनंपौष्टिकंचैव धर्मंदारधनादिकं ॥१९॥ द्वितीयस्यगुरोः पाके पापभुक्तौयदातदा ॥ करोतिदुःखबाहुल्यंरा
ज्ञात्ततधनंतदा ॥२०॥ बंधुद्वेषंमनोद्विग्नं वाचिकं दैन्यमेवच ॥ कुभोजनादिदुष्कर्मकुत्सितप्रेष्यभावना ॥२१॥ ॥इति-

गुरोरंतर्दशा ॥ ॥अथ शनेरंतर्दशा ॥ ॥ केंद्रस्थस्य शनेर्दाये यदा पापफलंतिस्तदा ॥ स्थानच्युतिर्प्रवासं च नृपचोराग्निपीडनं ॥२॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखं ॥ नृपाभिषेकमर्थाप्तिं देशग्रामाधिपत्यता ॥३॥ फलमीदृशमादौ तु भुक्तं पश्चात् रोगपीडनं ॥ परापवादं बंधूनां मरणं धननाशनं ॥४॥ त्रिकोणस्थशनेर्दाये पितृपुत्रविनाशनं ॥ पापभुक्तौ महत्कष्टं स्थल धान्यविनाशनं ॥६॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखं ॥ राजपूज्यं कृषेर्लाभं धनधान्याभिवर्धनं ॥७॥ स्वबंधुदारपुत्राणामारोग्यं भूषणादिकं ॥ - वाताक्षिमूलरोगं च स्वबंधुकलहं तथा ॥ उद्योगभंगं दुःखं च स्थलधान्यविनाशनं ॥ कर्मनाशमथापि वा ॥५॥ भृत्यमित्रार्थसंपत्तिं लभते धर्मसंग्रहं ॥८॥ षष्ठाष्टमव्ययस्थस्य शनेर्दाये शुभे नरा ॥ हानिर्दुःखं महत्कष्टं स्थाननाशं धनक्षयं ॥९॥ गुह्यरोगं विषाग्निं च ज्वरवन्हिनृपाद्भयं ॥ अत्यासबंधुमरणमुद्योगस्यविनाशनं ॥१०॥ षष्ठाष्टमव्ययस्थस्य शुभपाके महत्सुखं ॥ आरोग्यं कांतिवृद्धिं च देशग्रामाधिपत्यता ॥११॥ तृतीयलाभराशिस्थशनेः शुभफलंतिर्यदा ॥ पाके शुभफलं भाक्नृपलालनभूषणं ॥१२॥ तृतीयलाभराशिस्थशनेः पापफलंतिर्यदा ॥ पाके धनाप्तिं दुःखं च भ्रातृवर्गविनाशनं ॥१३॥ विदेशयानं कलहं वैकल्यं भृत्यनाशनं ॥ कुभोजनं परप्रेष्यं कुस्त्रीसंगमनं लभेत् ॥१४॥ धनस्थितशनेः पाके यदा-पापफलंतिर्भवेत् ॥ राजदंडमहाविघ्नं कारागृहनिरोधनं ॥१५॥ उत्साहभंगं देहार्तिं ज्वरातीसारपीडनं ॥ राज्यनाशं गवा-

श्वानांमरणंवाहनाद्भयं ॥ १६॥ द्वितीयस्थशनेः पाकेशभमुक्तौमनोद्दृदं ॥ उपकर्तृत्वमन्येषांद्यूतविद्याविनोदकं ॥ १७ ॥ गा-
नेकलिरहस्यंच भोजनांबरभूषणं ॥ उद्योगसिद्धिराज्याप्तिमणिविद्रुमकांचनं ॥ १८॥ ॥ इतिशनेर्वृत्तदशा ॥ ॥ ७
अथबुधांतर्दशा ॥ ॥ केंद्रस्थितस्यसौम्यस्यदशायांपापिनांतृतौ ॥ कर्मविघ्नंमहाद्दुःखंमनश्चांचल्यमेवच ॥ १॥ उत्सा
हभंगगोभूमिहिरण्यांबरनाशनं ॥ स्थानच्युतिमहाद्वेषंविद्यानाशंलभेत्तदा ॥ २॥ शुभभुक्तौबुधस्यापिपापकेंद्रगतस्यतु
वैवाहिकंयज्ञकर्मदानधर्मजपादिकं ॥ ३॥ ज्ञानाधिक्यंनृपात्प्रीतिंकृषिगोभूमिवर्धनं ॥ मुक्तामणिप्रवालादिवाहनांबरभूष
णं ॥ ४॥ ज्ञस्यत्रिकोणयुक्तस्यदशानांपापिनांतृतौ ॥ दारपुत्रार्थनाशंचकर्मनाशंमनोरुजं ॥ ५॥ कृषिवाणिज्यनाशंच बंधु
नाशमथापिवा ॥ पादभंगंमहाद्वेषंबंधुद्वेषंलभेन्नरः ॥ ६॥ तथाविधज्ञस्यपाकेशुभभुक्तौनृपात्प्रियं ॥ आरोग्यमतिसौ
ख्यंचसोमपानादिकंसुखं ॥ ७॥ स्वनामांकितपाद्यानिनामद्वयमथापिवा ॥ भोजनांबरभूषाप्तिंनरेशात्त्वंलभेन्नरः ॥ षष्ठाष्ट
मगतज्ञस्यपरिपाकेतुपापिनां ॥ तृतौचोरारिपीडांचज्वरातीसारपीडनं ॥ ९॥ स्वबंधुमरणंक्लेशंभृत्यस्त्रीपुत्रनाशनं ॥ वि
वादंविग्रहंसर्वैर्बंधुभिर्लभतेनरः ॥ १०॥ तथाविधाज्ञपुत्रस्यशुभभुक्तौमहद्यशः ॥ आरोग्यकांतिलाभंचदेवभूसुरतर्पणं
॥ ११॥ दशादौफलमेवंस्यादुत्तयंनेसुखनाशनं ॥ गोमहिष्यादिपीडांचवाक्पारुष्यंनृपाद्भयं ॥ १२॥ तृतीयायगतज्ञस्यशु

लाभंचविद्याबंधुसमागमं ॥७॥ भोजनांबरसौख्यंच भुक्त्यादौ फलमीदृशं ॥ भुक्त्यंतेस्थानचलनमकस्मात्कलहंवदेत् ॥८
षष्ठाष्टमव्ययस्थस्यकेतोर्दायेशुभेनरा ॥ त्वतिःकरोतिमरणंविदेशंवापदक्षमं ॥९॥ प्रमेहमूत्रगुल्मादिराजचोराग्निपीडनं
फलमादौनदंतेच यत्किंचित्सुखवर्धनं ॥१०॥ भुक्तौसौम्यग्रहाणांतुत्वतोस्त्रीपुत्रवर्धनं ॥ धान्यांबरविभूषाश्चिमणिप्रवर-
कांचयं ॥११॥ विप्रलंभंचशौर्यंचगोत्स्यादिपतनंतथा ॥ स्वबंधुजनशत्रुत्वंशिरोक्षिगुदपीडनं ॥१२॥ तृतीयलाभयुक्तस्य
केतोःपाकेपरंसुखं ॥ शुभभुक्तौनृपात्प्रीतिंविचित्रांबरभूषणं ॥१३॥ वाहनंभूमिलाभंचगंधमाल्यानुलेपनं ॥ दूरात्करा
गमंचैवस्वबंधुजनपूज्यतां ॥१४॥ पापभुक्तौतथाकेतोःपापकर्मसमाचरेत ॥ सर्वेषांविघ्नकर्तृत्वंबंधुभिस्त्यक्तजीवनं ॥१५॥
परप्रेष्यंकुवस्त्रंच भुक्त्यादौफलमीदृशं ॥ भुक्त्यंतेसुखमाप्नोतिदारपुत्रधनागमं ॥१६॥ धनस्थितध्वजस्यापिपारपाकेशुभे
तरा ॥ करोतिविविधदुःखंभेदस्यमन्नंमनोरुजं ॥१७॥ पुत्रमित्रकलत्राणांनाशनंमहदापद ॥ राज्ञाचोरेणवावित्तंह्रियतेबं-
धुनाशनं ॥१८॥ शुभभुक्तौधनाप्तिंच विद्यावादजयावहं ॥ परोपकारंसर्वेषांभोजनांबरभूषणं ॥१९॥ भुक्त्यादौफलमं
वस्यादंतेकिंचिद्धनव्ययं ॥ वाक्पारुष्यमनोद्विग्नप्रवृत्तेर्भंगमेववा ॥२०॥ ॥इतिकेतोरंतर्दशा ॥ ॥अथशुक्रांतर्द-
शा ॥ ॥केंद्रस्थितस्यशुक्रस्यसौम्यानांतुत्वतिर्यदा ॥ राज्याप्तिंराजसन्मानंयानांबरविभूषणं ॥१॥ उत्साहकीर्तिसंप

न्तिस्त्रीपुत्रधनसंपदः ॥ भाग्योत्तरंमनोधैर्यंराज्यद्वाराधिपत्यतां ॥२॥ तथाविधस्यवाच्छस्यपापभुक्तौधनक्षयं ॥ कुभोजनं-
कुवस्त्रंचशुभकर्मविनाशनं ॥३॥ भुक्त्यादौफलमेवस्यादंतेशोभनमादिशेत् ॥ कृषिगोभूमिपालंचदूरदेशाद्गनागमं ॥४॥
त्रिकोणस्थस्यशुक्रस्यशुभभुक्तौशुभाक्रिया ॥ देवभूसुरभक्तिश्चस्वकृतदारविवर्धनं ॥५॥ यज्ञादिकर्मलाभंचगोभूषण
जयावहं ॥ आरोग्यंदेहकांतिंचचिंतितार्थमनोरथं ॥६॥ तथाविधस्यशुक्रस्यपापभुक्तौमनोरुजं ॥ अनारोग्यममर्यादंनृ
पचोराग्निपीडनं ॥७॥ कुस्त्रीसंगकुवार्तांचबंधुद्वेषंमतिभ्रमं ॥ दुःस्वप्नंगोलिपतनंसपकीर्तिलभेन्नरः ॥८॥ पाकेशुक्रस्य
दुःस्थस्यशुभभुक्तौमहद्यशः ॥ राजसन्मानमथाप्निपुत्रस्त्रीधनसंपदः ॥९॥ वस्त्रवाहनभूषाप्निमादौचांतेमनोरुजं ॥ बं
धुद्वेषंगुरोर्नाशस्वकुलोद्भवनाशनं ॥१०॥ शुभयद्दाणांभुक्तौनुदेहारोग्यंमहत्सुखं ॥ परान्नपट्टवस्त्राप्तिगंधमाल्यविभूषणं
॥११॥ भुक्त्यादौफलमेवंस्यादंतेक्लेशकरंभवेत् ॥ चोराग्निदेहपीडांचस्वबंधुजननाशनं ॥१२॥ तृतीयायस्यशुक्रस्यपार-
पाकेशुभंतरा ॥ हानिर्दुःखमवाप्नोतिधनधान्यविनाशनं ॥१३॥ उद्योगभंगक्लेशंचचोराग्निनृपपीडनं ॥ भूविवादस्वबंधू
नांनाशनंस्वपदस्यच ॥१४॥ तथाविधस्यशुक्रस्यशुभभुक्तौमहत्सुखं ॥ नृपपूज्यमनोधैर्यंदेशग्रामाधिपत्यतां ॥१५॥
वाहनंभूषणाप्तिंचपुत्रस्त्रीभृत्यसंपदः ॥ कूपारामतटाकानांनिर्माणधर्मसंग्रहं ॥१६॥ धनस्थस्यापिशुक्रस्यशुभभुक्तौ-

महाश्रियं ॥ दारपुत्रार्थलाभंच स्वबंधुजनरक्षणं ॥१७॥ विद्याजयंमनोल्लासंदेवभूसुरतर्पणं ॥ यज्ञादिकर्मलाभंचलभे- अ·
न्नामद्वयंतथा ॥ १८ ॥ धनस्थितस्यशुक्रस्यपापमुक्तोभृशंवदेत् ॥ राजदंडंमनोदुःखंस्वल्पद्रोगाक्षिग्रपीडनं ॥१९॥ वि- १६
द्यावादंकृषेर्नाशंकर्महानिपदभ्रमं ॥ वन्हिचोरारिभीतिंचलभतेनात्रसंशयः ॥२०॥ ॥ इतिश्रीसर्वार्थचिंतामणौषो
डशोऽध्यायः ॥१६॥ यद्यज्जन्मानिनक्षत्रेवृद्धिभावमुपेयुषि ॥ तस्यश्रीरायुरारोग्यंभवत्येवविनिश्चयः ॥ १ ॥ तिथ्या-
दिषुतथावाच्यंक्षयेतस्मिन्क्षयोभवेत् ॥ तिथिरेकगुणाप्रोक्ताऋक्षंदशगुणंभवेत् ॥२॥ लग्नंलक्षगुणंप्रोक्तंतत्समूहेफ-
लादिकं ॥ केंद्रस्थिताजन्मनियस्यकस्यपापाश्चसर्वेविफलप्रदास्युः ॥३॥ कुर्वंतिदारिद्र्यमनेकदुःखश्वासक्षयप्लीहगुदो
दरार्ति ॥ ३ ॥ पापग्रहेकर्मगतेतिनीचेवक्रान्वितेपापखगैःप्रदृष्टे ॥ नाशंकलत्रस्यवदंतिनूनंमुनीश्वरास्तद्वदनेकशास्त्रे ॥४
दुःखीमूढोलोकविद्वेषकारीकाणःपंगुर्निर्धनोमानहीनः ॥ अल्पायुःस्यात्केंद्रगाःपापखेटाःब्रह्मद्वेषीचापकीर्तिश्चसर्वे ॥५॥
॥ ॥ शंकराचार्यस्तु ॥ ॥ लग्नेमानेसप्तमेचाथबंधौपापाःखेटाजन्मकालेतुसर्वे ॥ तिष्ठंत्यतेस्वल्पमायुःप्रमाणंनेत्रा
मेकोलग्नपोवायदिस्यात् ॥६॥ तथापितद्योगफलप्रमाणंतादृग्विधंस्यान्मुनयोवदंति ॥ स्वनीचभागादिमहीप्रयोगेप्येवंफलं ७७
दुःखितनिर्गतायुः ॥७॥ तथास्थितेजन्मनियस्यकस्यबाल्येत्रपित्रोर्मरणंचकष्टं ॥ भिक्षाशनेनाप्युदरस्यपूर्तिस्तदाभवत्येव

नदंगहीनं ॥ ८ ॥ स्वनीचभागादिमहीपयोगेजातेपियस्यापिनरस्यकस्य ॥ केंद्रत्रिकोणेशुभभोयुदिस्युस्तनदराजयोगंस
फलंवदंति ॥ ९ ॥ स्वेशोक्षितलग्नगतेक्रमांशोजीवेनदृष्टेधनराशिपेन ॥ स्वनीचभागादिमहीपयोगेजातोपिपमूमेरधिप
त्वमेति ॥ १० ॥ एवंचिंतामणौप्रोक्तं वेंकटेशेनधीमता ॥ नीचभागादियोगार्थराजयोगादिजंफलं ॥ ११ ॥ अथद्रेष्काणः
मेषद्वितीयःस्वगद्रेष्काणः ॥ मिथुनस्वगद्रेष्काणः ॥ अथकर्कद्वितीयः ॥ तृतीयःव्यालद्रेष्काणः ॥ कर्कतृतीयोपिव्याल
एव ॥ सिंहप्रथमःस्वगद्रेष्काणः ॥ वृश्चिकप्रथमद्वितीयौव्यालद्रेष्काणौ ॥ वृश्चिकतृतीयोपिव्यालः ॥ अथमकरप्रथमो
निगडद्रेष्काणः ॥ मीनतृतीयोव्यालद्रेष्काणः ॥ रविभौमार्कजाः शुक्राः सजलोच्चंद्रभार्गवो ॥ बुधवाचस्पतीज्ञेयोसजलो
जलराशिगो ॥ १ ॥ कुंभकर्कटकोमीनमकरालितुलाधराः ॥ सजलाराशयःप्रोक्तानिर्जलाःशेषराशयः ॥ ॥ इति-
सर्वार्थचिंतामणिःसमाप्तः ॥ ॥ ७ ॥ जन्मन्यर्कोहिमकरस्रुतःसैंहिकेयासुरज्योकेतुश्चंद्रोदिनकरसुतोभार्गवो
भूमिपुत्रः ॥ तापकांतिक्षनिधृनिलयंकीर्तिहानिप्रमोदमृत्युनाशबलमनुदिनंसंचरतिक्रमेण ॥ १ ॥ ग्रहाणांपरस्परस्थान
वशेनबाधकत्वमाह ॥ क्रमाच्चरागद्विशरीरभाजामुपांत्य ११ धर्म ९ स्मर ७ गास्तदीशाः ॥ स्वरेशमादिस्थितराशिना
थाअतीवबाधाकरखेचरास्युः ॥ २ ॥ द्युमणि १ रमरमंत्री २ भूसुतः ३ सोमसौम्यो ४ गुरु ५ रिनतनयोरो ६ भार्गवो ७

र्विं भानुपुत्रः ८ दिनकरादिविजेड्यो ९ जीवभानुज्ञमंदाः १० स्फरगुरु ११ रिनसूनुः १२ कारकाख्याविलभान् ॥ ॥शुभ ग्रं
१८ ममस्तु ॥ ॥ पितृमनापारोग्यमनः शुभचिरुचिज्ञानोदयकारकः सूर्यः ॥ धवलचामरयशोदयामोदकांतिसुखलावण्य
मातृमनः प्रसादकारश्चंद्रः ॥ पराक्रमविजयविख्यातिसंग्रामसाहससेनापत्यदंडनेतृत्वखड्गपरश्वधकुंतकुठारशातम्रीभिं
दिपालधनुर्बाणानैपुण्यधृतिगांभीर्यकामक्रोधशत्रुवृद्धिआग्रहावग्रहपरापवादस्वतंत्रधातृभूकारकः कुजः ॥ संततिशां
तिविनयभक्तिमतिमातुलबांधवज्ञातिगोत्रसमृद्धिगणितप्रज्ञावेदांतविद्याकारकोबुधः ॥ ४ ॥ वाकूधोरणीमंत्रराजतंत्रने
ष्ठिकगजतुरंगयाननिगमाबोधकर्मपुत्रसंपज्जीवनोपायक्रमयोगासिंहासनकारकोगुरुः ॥ ५ ॥ संगीतसाहित्यदास्यरसा-
द्भुतमदनसुवतिरतिकेलिविलासविचित्रचित्रकांतिसौंदर्ययुवतिराजवशीकरणराजसुखवशीकरणगारुडेंद्रजालमालावैशद्य
महदणिमाद्यष्टैश्वर्यकाव्यकलासमभोगकलत्रकारकः शुक्रः ॥ ६ ॥ लोभमोहविषमपरपीडानिर्घातनेत्रुर्यदुर्मतिदारिद्य-
दुर्दशामयवातवंचनमहिषीयवापूकृष्णधान्यायुष्यजीवनोपायकारकः शनिः ॥ ७ ॥ यशःप्रतिष्ठाछत्रकारकोराहुः ॥ ॐ ॥
॥ ॐ ॥ इतिसं० सू० समाप्तः ॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥ शुभमस्तु ॥ ॐ ॥ ॐ ॥ ॐ श्रीसीतारामप्रसं० ॥ ७८
॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥

॥ हें पुस्तक, मुंबईयेथें. बापू सदाशीवशेटहेगिष्टे शेट्ये श्रीवर्धनकर, याणी आपले शिलाप्रेसावर छापिलें; ॥ शके १७८८ क्षयनामसंवत् ॥ मार्गशीर्षशुक्ल १ तद्दिने समाप्तोयंग्रंथः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥







॥ इतिसर्वार्थचिंतामणिःसमाप्तिमगमच्छुभम् ॥